[१०. १९] ३३६. १६ [१] सेचयत। अवगाहनगोदोहन°—त३। सेचत अवगाहनगोदोहन°–ग; मेचयत अवगाहत गोदोहन°–त५। सेचयत अवगाहन°–म१.२.४। सेचयत अवगाहत मानु गात अस्मद्व्यतिरिक्त यजमाने मा गच्छत गोदोहन°–त१.२.६.७। एतेषु उपरितना भाष्यपङ्क्तिः मध्ये प्रविष्टा। सेचयत अवगाहन°–म६; सचयत अवमाहन°–म७। सेचयत अवगाहत गोदोहन°–त४-ᵒमॅ-मु। 'सेचयत' इत्यस्य 'अवगाहत' इति पुनर्व्याख्यानं नोचितम्। तथा च गाह्धातुरात्मनेपदी। 'अवगाहध्वम्' इति भाष्यम्। बहुषु पुस्तकेषु 'अवगाहन' इति भावात् 'त' स्थाने 'न' एव पठनीयः। वाहनदोहन°–उद्गीथ॥ १७ आच्छादयितारौ हे अग्नीषोमा अग्नीषोमौ—त३-४-म६-मु। आच्छादयितारौ–त१.२.५.६.७-म१.२.४.७-मॅ॥ ३३५. ४ [३] सास्नादिमतीनां—ग-त३-म२-ᵒमॅ-मु-उद्गीथ। सास्वादिमतीना–त१.२.४.५.६; सास्वाधादिमतीनां–त७; सास्न्यादिमतीना–म१.४; सस्न्यादिमतीनो–म७॥ वृष्टिलक्षणानामपां। 'अपां वा वृष्टिलक्षणानाम्' इत्युद्गीथभाष्यपाठः साधीयान्॥ १५ [४] 'सज्ञानं यत्परायणं आवर्तनम्' इति पदत्रयस्य व्याख्यानं लुप्तम्। उद्गीथभाष्ये उपलभ्यते तद्यथा— यदपि गवां संज्ञानं। सम्यग्ज्ञायतेऽनेनेति सज्ञानम्। शबलादिचिह्न नाम वा। तदपि प्रार्थये। यदपि गवां परायण परागमनं चरित्रं वनं प्रति गमनं तदपि प्रार्थये। यदपि गवामावर्तनं वने चरितुमितश्चेतश्च प्रवर्तनं तदपि प्रार्थये॥

[१०. २०] ३३७. १ [१] उद्गीथमते 'भद्रं नो अपि वातय मनः' इति मन्त्रस्यानन्तरं सप्तमाष्टकस्य प्रथमोऽध्यायः समाप्तः 'अग्निमीळे' इति मन्त्रेण च नवीनं सूक्तमध्यायश्च प्रारब्धः॥ १४ [२] स्वरित्ययं सर्वशब्दो निपातः। अशुद्धः प्रयोगः॥ ३३९. २० [१०] किंचिद्देयमस्ति—ग-त३-म१.२.४.६-ᵒमॅ-मु। किंचिद्व यमस्ति–त१.२.४.५.६; किंचिदेय यमस्ति–त७; किंचिदेयमस्ति–म७॥

[१०. २१] ३४०. १९ [३] आसते उपासते—म। आसते–त-मॅ-मु॥

[१०. २२] ३४३. ८ [३] आङ् मर्यादायाम्। आ समाप्तेः—ᵒमॅ-मु। आमर्यादया (अमर्यादया–त६) असमाप्तः–ग-त३.४.५.६-म६-उद्गीथ, असमाप्त –त१.२; अमर्यादया असमाप्तः–त७; आ मर्यादया आ समाप्तेः–म१.२.४; आङ् मर्यादायां असमाप्तः–म५; आ मर्यादायां आ समाप्तेः–म७॥ ३४५. २३ [११] क्षिप्रकरण°—ग-त४। क्षिप्रकारण°—त१.२.५.६-मॅ-मु। क्षिप्रकरणे युक्तानीत्यर्थः–उद्गीथ॥ ३४६. २ [१२] कुध्न्यक्—त-मॅ-मु। अकुध्न्यक्–म७-उद्गीथ। अकुध्न्यक्–म१.४। 'अकुध्न्यक्' इति संहिता॥ ११ [१३] सन्त्विति निर्देशविशेषणत्वात्—ग। सति निर्देशमाविशेषणत्वात्–त; सति निर्देशाविशेषणत्वात्–त३-म१.२.४.७; बहुवचननिर्देशविशेषणत्वात्–म६। सति निर्देशस्याविशेषणत्वात्–मॅ। सति निर्देशस्याविशेषणत्वात्–मु। स्तुतिनिर्देशविशेषत्वात्–उद्गीथ॥

[१०. २३] ३४७. ३० [२] मघवा—ग-त३-म१.२.४-मु। अगवा–त-म६। मघवान्–मॅ॥ ३४८. ९ [३] वहतः—§-मॅ। वि वहतः–मु॥ ३४९. १ [५] वर्धयति–§-उद्गीथ। ववृधे वर्धयति–मॅ-मु। 'ववृधे' इति प्रतीकस्य अग्रे वर्तमानत्वात् पुनर्ग्रहणमनावश्यकम्॥ २० [७] केचिदपि—§-मु-उद्गीथ। काचिदपि–मॅ। पुस्तकेष्वनुपलभ्यमानः पाठः मॅक्समुल्लर-

महाशयैः कुतो गृहीतः ? मुद्रणदोषो वा ? केचित्–उद्गीथ ॥ २१ प्रमतिं प्रकृष्टां मतिं—त१.२. ६. ७-मु-उद्गीथ। प्रकृष्टमति-ग-त३.४-म५-६; प्रकृष्टामतिं–म१.२.४। प्रमतिं–म७-मॅ ॥

[१०. २४] ३५१. ४ [४] ईळिता ईळितौ—ग-म-मु। ईळितौ–त-मॅ ॥

[१०. २५] ३५४. ९ [७] प्रार्थ्यसे—त-मु-उद्गीथ। प्रार्थ्यते–म-मॅ॥ २५ [९] तस्मिन्। अतिमहतीत्यर्थः—०मॅ-मु। तस्मिन् सतीत्यर्थः–ग; तस्मिन् सतिमहतीत्यर्थः–त-म६; तस्मिन् सर्वेति महतीत्यर्थः–त३-म१.४; तस्मिन् सर्वाणि महतीत्यर्थः–म७॥ ३५५. ६ [१०] वर्धयेदित्यर्थः—म। अवर्धयदित्यर्थः–त-मॅ-मु। वर्धयत्विति शेषः–उद्गीथ ॥

[१०. २६] ३५६. २० [४] परिचर्याद्वारेण—मु। परिचर्यादावादरेण–ग; परिचर्यादा-त१.२.६.७; परिचर्यादारणं–त४.५-म२; परिचर्याद्वारण–त३-म१.४; परिचर्याचरणं–म६। परिचर्यादरेण–म७-मॅ। परिचर्यात्यादरेण–उद्गीथ ॥ २५ [५] रथानामश्वहयः। हयतिर्गतिकर्मा। रथानां संबन्धिभिः—मॅ। रथानां संबधिभिः अश्वहयः हयतिर्गतिकर्मा–§-मु। उद्गीथभाष्यपाठः मॅ-पाठ द्रढयति॥ ३५७.१६. [७] वि अदूधोत्—§–मॅ। वि दूधोत्–मु संहितायां च॥

[१०. २७] ३५८. २३. [२] यत् यदा अहमित् अहमेव—त३.४-म६-मु। अहमिदहमेव–ग; ययदाहमित्य अहमेव–त१.२.५.६.७; ययदा अहमेव–म१.२.४। यदीयदाहमेव–मॅ। 'यदि' इत्यस्य स्थाने 'यत्' इति भाष्यकारैः पठितमित्येव मन्तुमुचितम् ॥ ३५९.१६. [४] शरीरशस्त्रास्त्रबलादिभिः। शरीरशस्त्रावलादिभिः–म१;शरीरशस्त्राबलादिभिः–म४, शरीरशस्त्रबालादिभिः–म७; शरीरशस्त्रास्त्रेषुबलादिभिः–म६; शारीरशस्त्रास्त्रबलतः–उद्गीथ; शरीरबलास्त्रबलादिभिः–त-मॅ-मु॥२६ [५] वै उ इत्येवैव–म१.४-०मॅ। वै उ इत्येतैव–मु बहुषु पुस्तकेषु च ॥ ३६०. १७ [७] मध्यमपुरुषेनेन्द्रस्यो°—म७-मु। मध्यमपुरुषेंद्रस्यो°–त-म१.२.४; मध्यमपुरुषस्येंद्रस्यो°–म६। मध्यमपुरुषत्वेनेंद्रस्यो°–मॅ। मध्यमपुरुषेण प्रथमपुरुषेण च–उद्गीथ ॥ ३६०. २९. [७] गच्छंत्यौ—०मॅ। गंत्यौ (गंच्यौ–ग त-४.६-म५; गच्छंत्यौ–म६) यद्वा सर्वस्य प्रकर्षेणाच्छादयित्र्यौ रेफाच्छादसः (रेफलोपश्छांदसः–म६-मु)–ग-त-म मु॥ ३६१. ११. [८] दुदुहे—०मॅ। दुदुहु–ग, दुहदि–त१.२.५.६; दुहू–त३.४-म१.२.४.६; दुह–म७। दुहे–मु ॥ १२. [९] त७-मु-पुस्तकयोरुपलभ्यमानं नवममन्त्रभाष्यमधष्टिप्पण्यामुद्धृतमेव। इतरपुस्तकेष्वेतन्मन्त्रभाष्यं लुप्तम्। उद्गीथभाष्य उपलभ्यमानमस्य मन्त्रस्य भाष्यमधो दीयते—

'पुरुष एवेदं सर्वं' (ऋ. सं. १०. ९०. २) 'सर्वं खल्विदं ब्रह्म' (छां. उ. ३.१४.१) इत्यादिवचनात् कारणात्मनः सर्वात्मकत्वादहमेव सम्यक् ज्ञानयोगात् कारणात्मरूपेण स्थित्वा स्थावरजंगमलक्षणं यच्च द्विपाच्चतुष्पादादिकं च सर्वमुत्पादयामीति कारणात्मरूपेणात्मानमिन्द्रः स्तौति।जनानां सर्वप्राणिनां यदत्तव्यं यवसं यवाद्यन्नं च तस्य सर्वस्य यवसस्य यवाद्यन्नस्य च वयमेव सम्यगत्तारो द्विपदचतुष्पदादीनां कार्यरूपेण स्थितत्वादहमेव कारणरूपेण स्थित्वा सर्वस्य यवादिकान्नस्यात्ता। क स्थितः सन्नत्ता त्वमुच्यते–उरुअज्रे अन्तः। उरु विस्तरेण। अज गतिक्षेपणयोः। अन्तरिति समीप्यवचनः। विस्तीर्णस्य जनस्य गमनस्य जगतो मध्ये स्थितः सन्नत्तामीत्यर्थः। 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (भगवद्गीता ६. ४५) इति वचनान्मोक्षस्य दुष्प्रापत्वात्। अत्रास्मिन्नेव जन्मनि

अवधातारं संसारान्तस्य कर्तारं मोक्षं गमयितारं मामेव इच्छात् आराधयितुमिच्छति । कः । योगीन्द्र एव संसारसागरादुद्धर्ता नान्य इति परया भक्त्या योऽयमाराधयति योगेन तमहमस्मिन्नेव जन्मनि संसारान्मोचयामीत्यर्थः । अथो अपि च अयुक्तमयोगिनं युनजत् । उत्तमस्य स्थाने प्रथमोऽयम् । पुनर्जन्मात्मना संसारान्मोचयामीत्यर्थः । ववन्वान् सम्भजन्नह यदि कामयेयमित्यर्थः ॥ ३२. [१०] उत्पादयानीति त्वं जानीहि—ग-म५। उत्पादयानीति-त-भ१.२.४; उत्पादयामीति त्व जानीहि-त३-म६; उत्पादयामीति-त४-मॆ-मु। उत्पादयानीति जानीहि त्व-उद्गीथ। यत्स्थावरजंगमात्मक जगत् तदहं संसृजानि उत्पादयानीत्यर्थः ॥ ३६२. २४ [१२] अवस्थितमिति । 'अवस्थितमपि' इति भाष्यमिति प्रतिभाति ॥ ३६३. १३. [१४] पराशद्नवर्जितः—त२-मॆ-मु-उद्गीथ। मॆ-पुस्तकेऽयं पाठो मु-पुस्तकानुसारेण स्वीकृत. ॥ ३६४. १ [१५] तिरन्ति—ग-म६-*मॆ-मु। तर-त; तरति-भ ॥ ४. तिरन्ति—*मॆ-मु। तरति-त-भ ॥ १४. [१६] तत्र—*मॆ। गति°-त-भ, गर्भ°-म१(२)। गर्भवास-उद्गीथ ॥ २२. [१७] पक्वन्तो—§-मॆ-मु। ऋ. सं. ६.२०.१३ भाष्ये 'पक्तवान्' इति पाठोऽस्माभिरभ्यूह्य स्वीकृतः। शोऽनेन प्रमाणितः ॥ ३६५. ८. [१८] वनति-त-म१.२.४.७-मु-उद्गीथ। वनते-म६। वनुते-मॆ ॥ १३. [१९] भूतसंघं-त-भ-मु। ग्राम-भूत संघ-मॆ। भूतसंघातं-उद्गीथ ॥ १७. युगा युगानि-ग-त३-म६-*मॆ-उद्गीथ। युगा युग्मानि-त-म१.२.४.७-मु ॥ २५. [२०] अभेदोपचारान्—म१(२)। उपचारात्-त-भ-मॆ-मु। एकत्वोपचारात्-उद्गीथ ॥ २६. युक्तौ रथे नियुक्तौ—ग-त३-म५.६। युक्तौ-त-म१.२.४.७-मॆ-मु ॥ सु सुष्ठु—म६। सुष्ठु-त-म१.२.४.७-मॆ-मु ॥ सुष्ठु अभिपूजितौ-उद्गीथ। 'सुष्ठु पूजितौ' इत्यस्य स्थाने 'सुष्ठु योजितौ' इति पाठो 'युक्तौ' इति पदस्य व्याख्यानत्वेन मॆक्समुल्लरमहाशयैः सूचितः। परं 'सुष्ठु पूजितौ' इति 'सु' इति पदस्य व्याख्यानम्। 'युक्तौ' इति पदस्य व्याख्यान-मुपर्यागतमेव। 'युक्तौ' इत्यस्य 'सुष्ठु योजितौ' इति व्याख्यानाभ्युपगमे 'सुष्ठु' इति पद 'योजितौ' इति णिजन्त रूपं चोभयमप्यनावश्यकम् ॥ ३६७. ३. [२३] प्रीणयितृ पूरयितृ वा—ग-त३-म५.६-उद्गीथ। प्रीणयितृ-त म१.४-मॆ। पालयितृ प्रीणयितृ वा-मु।

[१०.२८] ३६७. २३. शेषा। शिष्टा-अनु ॥ ३६८.२६. [४] अत्सारीन्—*मॆ। अत्सान्-ग; अत्सात्-त१.२.४.५.७-म-मु; त्सरात्-त६॥ २७ अतिगहनदेशान्—*मॆ-मु। निम-र्जनदेशात्-ग; अभिद्दनदेशात्-त-म६; निर्गहनदेशात्-म१.२.४.७। गहनं देशात्-उद्गीथ॥ ३६९. २८. [७] मेघमसुरं वा-म६-मु। मेघासुर वा-त-म१.२.४.७। मेघासुरं-मॆ। वृषमसुरं मेघं-उद्गीथ ॥ ३७०.१६. [९] बलवत्क्रूरशूरमृग°—म१.२.४.७-उद्गीथ। बलवत्क्रूरस्यमृग°-त। बलवत्क्रूरमृग°-ग-म६-*मॆ-मु ॥ २७. [१०] करस्योपरि—§-मॆ-मु। पञ्जरस्य परि-उद्गीथ॥

[१०.२९.] ३७२.९. [१] एवं तावत्—म६-मु। एव तावत्-त१.२.५.६.७-म२; एवा एतावत्-त४। एतावत्-मॆ ॥ ३७३.२. [२] स रथः शुस्सेन कुत्सो—*मॆ। स रथः कुत्सेर-ग; स रथः कुत्सो-त१.२.४.५ ६-म६; रथः कुत्सो-त७, स रथः कुत्सेन-म१.२.४.७। त रथं कुत्सो-मु ॥ १३. [३] सर्वार्थदर्शिनी—म१.४.७। सर्वार्थदर्शनीय-त४ (प्रान्ते)। त-पुस्तकेषु भाष्यांशो लुप्तः। सर्वार्थदर्शना-मॆ-मु। सर्वार्थदर्शनी-उद्गीथ ॥ १५. वयं...शक्यां... संगमयेयम् (?)-§-मॆ-मु। उद्गीथभाष्ये 'वयं' नास्ति ॥ ३७४. १७. [६] स्वाझन्—

त२.६.७–भ४.७–मॅ। स्वाद्मन् स्वादु–त४; स्वाद्मन् स्वादुयुक्ता–म६। त५-म१.२–पुस्तकेषु 'स्वाद्मन्' इत्यस्यानन्तरमवकाशो दत्तः। स्वाद्मन्शब्दस्य व्याख्यानमत्रापेक्षितं दृश्यते॥ १८. अस्माभिर्दत्ताः—त–भ२.६। अस्माभिर्दत्तः–ग; अस्माद्दत्ताः–भ१.४.७। स्वाद्मन् स्वाद्मनः स्वादिष्ठाः मर्वतु अस्माभिर्दत्ताः संतु–मु। आस्वादिताः–°मॅ। स्वाद्मन्शब्दस्य व्याख्यानं लुप्तमस्तीति स्वीकरणे 'आस्वादिताः' इत्यम्यूहोऽनावश्यकः स्यात्। बहुषु पुस्तकेषूपलभ्यमानत्वात् स्वीकृतपाठ उपपन्नः प्रतिभाति। 'मधूनि' इति पदस्य व्याख्यानं स्वीकृतपाठमेव प्रमाणयति। उद्गीथभाष्यमनुद्रमपि द्रष्टव्यम्॥ २४. [७] अस्येन्द्रस्यार्थं—ग–उद्गीथ। अस्येंद्रार्यं–त-भ१.२.४.६.मु; इंद्रायार्यं–म७। इंद्रार्यं–मॅ॥ ३७५.३. [८] इन्द्रः—§–मु। व इंद्रः–मॅ॥

[१०. ३०] ३७५. १२. अप इष्य—§–मु। अपयिष्य (?)–मॅ॥ ३७६. ११. [३] आर्थिकोऽयं—ग-भ६-मु। अर्थिकोयं–त। स्वार्थिकोऽयं–म१.२.४-मॅ। अर्थोऽयं–उद्गीथ॥ ३७७. २१. [७] °वेष्टनाभिर्हिंसनात्—°मॅ-मु। मु-पुस्तकपाठ एव मॅ-पुस्तके स्वीकृतः। °वेष्टिताभिः हिंसनात्–त-भ६; °वेष्टिताभिः हिंसात्–भ१; °विष्टिताभिः हिंसात्–भ४। °वेष्टनाभिः हिंसातः–उद्गीथ॥ ३७८. १. [८] प्रगमयत......शृणुत—ग-त१.२.४.६.७–भ१.२.४.६–मु। म६–पुस्तके 'प्रगमयत' इत्यस्य स्थाने 'प्रसंगमयत', 'तैर्वनवत्यः' इत्यस्य स्थाने च 'तद्वत्यः'। त१.२.७-म२–पुस्तकेषु 'रेवतीः' नास्ति। उत्तरार्धव्याख्यानरूपोऽयं भागः त५-मॅ–पुस्तकयोर्नास्ति। न चायं मॅक्समुल्लरमहाशयैः स्वीयेषु लिखितपुस्तकेषूपलब्धः। अस्य मन्त्रस्योद्गीथभाष्यमत्रोद्ध्रियते–'यच्छन्दसंबन्धाद्द्वितीये पादे ! गर्भधारः यो वः युष्माकं स्वभूतः हे सिन्धवः स्यन्दनशीलाः नद्यः मधुनः मृष्टरसस्य उत्सः उत्स्यन्दिनः उत्क्षिपिता। यच्छन्दसंबन्धात् गर्भे ! मधुमन्तं मधुस्वादोपेतं ऊर्मिमप्संघातम्। घृतपृष्ठं घृतेनाज्येन पृष्ठमीड्यं स्तुत्यमध्वरेषु यज्ञेषु। ईदृशं सारं युष्मत्संबन्धिनमस्मै अस्येन्द्रस्यार्थाय प्रहिणोत प्रगमयत प्रस्थापयतास्मद्यज्ञं प्रत्यंगभावाय। हे आपः अस्य युष्माभिः दातव्ये ! दृष्टादृष्टफललक्षणेन तद्वत्यं शृणुत हवमाह्वानं वचनमेतदित्यर्थः। मे मम स्वभूतम्'। अशुद्धमेतत्सायणभाष्यानुसारेण शोधयितुं शक्यम्। ईषद्वचनाभेदे सत्यपि स्वीकृतपाठमेतत्प्रमाणयति॥ ११. [९] नभोजां—ग-त७-म६–°मॅ-मु-उद्गीथ। नभोजं–त१.२.४.५.६-म२; नभोज–भ१.४॥ ३८०. ११. [१४] आग्मन्—°मॅ-मु–उद्गीथ। अग्मन्–§॥

[१०. ३१.] ३८२. ११. [४] वाग्भिः स्तुतः—म२.५.६। वाग्भिः स्तुत–त३-भ१.४। वाग्भिः–त-मॅ-मु॥ २८. [६] सुष्टुतिः—त६। सुस्तुतिः–मॅ-मु इतरेषु च। सुस्तुतिः–उद्गीथ॥ ३८३. १४. [८] एतावद्देवजातं...अपि तु एता—°मॅ-मु। तावदेवजातं सामर्थ्येन युक्तं–ग; एतावद्देवजातं सामर्थ्येन युक्तमिति अपि तु एता–त; एताः देवा वा जातं सामर्थ्येन युक्तं भ१.४.७; एतावद्देवजातं सामर्थ्योयुक्तं एता–त३; एतावद्देवजातं सामर्थ्येन युक्तमिति एता–म२। न एतावत्। नैतावद्देवजातं सामर्थ्ययुक्तं। किं तर्हि एता–उद्गीथ॥ ३८४. १२. [१०] इयादेशः—त-भ१.२.४.६-मु। क्याडागमः–त३; इयाडागमः–भ५। इयादेशः–ग-म७-मॅ। इयादेशे 'याम्या' इति रूपं भवेत्। अतः स्वीकृतपाठो न युक्तः। परं बहुषु पुस्तकेषूपलभ्यमानत्वात् स्वीकृतः। 'इयादेशः' इति मॅ-पाठोऽशुद्ध एव। 'आ-आदेशः' इति युक्तम्॥

[१०. ३२] ३८५. १२. [२] रज शब्दाच्छस आकारः—भ६-॰मॅ-मु। इतर-लिखितपुस्तकेष्वशुद्धाः पाठाः ॥ ३८६.४. [४] यत्र—त-म२.६-मु। यत्र-त३-म१.४; यदा-भ७। यदा-मॅ ॥ ६. यत आगत्य प्रकाशयेत्तत्र (प्रकाशयेयत्र-भ६) कारणमाह (तारणमाह—त३-म१.२)–ग त-म-मु। यत आगत्य प्रकाशस्ततोऽत्र कारणमाह-॰मॅ। स्वीकृतपाठो मॅक्स-मुल्लरमहाशयैरवलम्बोऽपि किमर्थं त्यक्तोऽभ्यूहश्चाश्रित इति न ज्ञायते। स्वीकृतपाठ एव सम्यगर्थं-मावहति न मॅक्समुल्लरमहाशयैरभ्यूहितः पाठः॥ ३८७. २. [६] अन्तर्हितं स्थो—ग-त३-भ। अंतर्हितं-त४.५। अतर्हितं-त१.२.६.७-मॅ-मु ॥ ३८८ ५. [९] हे कलश कलावन्—भ६-मु। हे कलश कलावान्-त१.२.६.७, हे कलश कलावन्-त३.४.५; हे कलश कलशान्-म१.२.४। हे कलश-भ७-मॅ। हे कलश कलाशयन सर्वकलाधारपरिपूर्ण-उद्गीथ॥ १३. [९] बहुवचनम्। एवं—त३.४-म५। बहुवचन पद-त१.२.५.६-मु; बहुवचन पदा-त७; बहुवचनं-ग-म१.४.६। बहुवचनपद मॅ॥

[१०. ३३] ३८९. १२. [२] पार्श्वास्थीनि—ग-म१.२.४-॰मॅ-मु। पार्श्वस्थानि-त; पार्श्वस्थीनि-भ६; पार्श्वास्थानि-भ७॥ १६. कम्पयते (२)। 'कम्पते' इति साधु॥ ३९०.८. [५] प्रष्टिवाहिनं रथं—॰मॅ। तिष्टिवाहिनं रथ-ग, प्रतिष्ठवाहिनं (प्रतिष्ठ॰–त५) रथं च-त१.४.५.६.७; प्रतिष्ठवाहिन रथ-म१.२.४.७; प्रतिष्ठावाहिनं तं रथ च-भ६। प्रष्टिवाहिनं रथं च-मु॥ २९. [९] न जीवति—त-भ६-मु। जीवति-म१.२.४.७-मॅ॥

[१०. ३४] ३९१. २. अत्र द्वादश्यक्षान् स्तौति......सा देवता—॰मॅ। अयं पाठो मॅक्समुल्लरमहाशयैरभ्यूहितः। अभ्यूहे कारणान्यपि तैः स्वकीयटिप्पण्यां प्रदर्शितानि। लिखित-पुस्तकेषु साधारण्येनैतादृशः पाठो विद्यते-'अत्र द्वादश्याक्षान्स्तौति नवम्याद्याश्चावतस्तास्तद्देवत्यः सप्तमी त्रयोदशी च कृषिं स्तौति अतस्तयोः सा देवता'। बृहद्देवतापाठस्त्वेवं वर्तते-'अत्राक्षान्द्वादशी स्तौति नवम्याद्या च सप्तमी। त्रयोदशी कृषिं स्तौति... ..'। बृहद्देवतापाठमुद्धृत्य सूक्तदेवताः कथयितुं भाष्यकारा उद्युक्ताः। सप्तमी ऋक् न कृषिं स्तौति किंतु अक्षान् स्तौति। तथा च 'स्तौति' इति क्रियापदमेकवचनान्तम्। 'तयोः' इति पदमप्यपद्धमिति स्पष्टमेव। एतामशुद्धिं दूरीकृत्य यः पाठो मॅक्समुल्लरमहाशयैरभ्यूहितः स युक्त एव। मु-पुस्तकेऽशुद्धः पाठः॥ १०. विभीतकस्य—ग-॰मॅ-मु। विभीतकस्य-त१.२.४.५; विभीदकस्य-त७; विभीतस्य-भ१.४.७॥ १३. [१] अचच्छदत्—ग-॰मॅ-मु। अवछत्-त१.२ ६; अचछत्-त४.५; अचछदत्-त७-भ॥ ३९२. १७. [५] न दूपये—त७-॰मॅ-मु। न दूये-ग, दूपये-त-भ॥ ३९३. ५. [७] नितोदितवन्तश्च—॰मॅ। नितोदितवंतश्च द्यूतपुरुषे च कृषौ प्रवर्तमानेन-त१.२.६; नितोदितवंतश्च पुरुषे च कृषौ प्रवर्तमाने-त४-मु; नितोदितवंतश्च पुरुषश्च कृषौ प्रवर्तमाने-त५; नितोदितवंतश्च द्यूतपुरुषे च कृषौ प्रवर्तमान-त७; नितोदितवतश्च पुरुषस्य कृषौ प्रवर्तमाने-ग; नितोदितवंतश्च पुरुषस्य कृषौ प्रवर्तमाने-म१.२.४; नितोदितवंतश्च पुरुषस्य कृषौ प्रवर्तमानाः-भ६। एतत्सूक्तप्रस्तावनायां सप्तममन्त्रस्य देवताविषये योऽभ्यूहः कृतः स समुचितस्तर्ह्ययमप्यभ्यूह आवश्यको भवति। येनम्याः कृषिस्तुतित्वं यदा प्रस्तावनायां प्रविष्ट तदैव 'पुरुषस्य कृषौ प्रवर्तमानस्य' इत्यपपाठो भाष्ये प्रविष्ट॥ १६. [८] आस्फारे—भ१.२.४-॰मॅ। आस्थाल्य-ग; अस्फारे-त-भ६-मु। आस्कोरा-भ७॥ ३९५. ४. [१३] रतिं—उद्गीथ-मु-आउफ्रेक्ट। मतिं-ई-मॅ॥

[ १०. ३५ ] ३९५. २७. [ १ ] द्यावापृथिवी द्यावापृथिव्यौ—ग-त३-म१.२.४.५.७। द्यावापृथिव्यौ-त-म६-मॅ-मु ॥ ३९७. ६. [ ६ ] अश्विनावपि—त-म-मु। अश्विनौ-मॅ ॥ २४. [ ७ ] स प्रार्थितः—ग-त३-म१.२.४.७। अप्रार्थितः (?)-त-म६-मॅ। प्रार्थितः-मु ॥ ३९८. २७. [ १२ ] पथ्ये पशवे—मु। पथ्ये-म। पथ्ये पश्चात्मकाय-त१.२.७-म६-मॅ; पश्चात्मकाय-त४.५। ऋ. सं. १.४२.२; १.६५.१; ८.५.२०; १०.६१.१२ द्रष्टव्यम् ॥

[ १०. ३६. ] ३९९. २७. [ १ ] सर्वं—ग-त३-म१.२.४.७-०मॅ। स्वर्ग-त१.२.६.७-मु; शर्व-त४; शर्ग-त५; शर्ग-म६ ॥ ४००. २८. [ ५ ] पिन्वतां सिञ्चतु—ग-म५.६। पिन्वतां प्रीणयतु किंतु-त१.२.६.७-मु; पिन्वतां किंतु-त४.५-म१.४.७-मॅ। पिन्वतां वृष्ट्या सिंचतु-उद्गीथ ॥ ४०१. ८. [ ६ ] अस्माकं—ग-त३-म। नोऽस्माकं-त-मॅ-मु। प्रथमायां पङ्क्तावपि 'नोऽस्माकम्' इत्यनावश्यकम्। 'अस्माकम्' इत्येव प्रतीकम् ॥

[ १०. ३७. ] ४०३. २०. येन सूर्य-म-मु। येन सूर्यो-त-मॅ ॥ ४०४. २. [ १ ] देवेषु जाताय—त१.२.४-म। देवेषु जाताय देवार्थमुत्पन्नाय-त२.७-मॅ-मु। देवार्थमुत्पन्नाय-त५.६-म६। देवजाताय देवात् प्रजापतेः सकाशादुत्पन्नाय-उद्गीथ ॥ ४०७. १०. [ १२ ] निधत्त—ग-त३-म५.६-मु-उद्गीथ। विधत्त-त-म१.२.४.७-मॅ ॥

[ १०. ३८. ] ४०७. १३. ताण्ड्यशाट्यायनकाः—म६-मु। तांडकं छाट्यायनकाः-ग; तांड्वा शाट्यायनका-त१.२.४.५.६; तांडवा छाट्यायनका-त३-म१.२.४; तांडवाः शाट्यायनकाः-त७-०मॅ। पञ्चममन्त्रभाष्यं द्रष्टव्यम्। 'तांडवशाट्यायनका' इति मॅ-संसूचितम् ॥ ४०८. ५. [ ३ ] त्रैवर्णिको वा अदेवः देवादन्यो—म१.४.६.७। त्रैवर्णिको वादेवः अन्यो-त१.२.६; त्रैवर्णिको वा देवादन्यो-त५। त्रैवर्णिको वादेवश्चान्यो-मु। त्रैवर्णिकोऽदेवः देवादन्यो-म२-मॅ। यो दासः अकुलीन इत्यर्थः। आर्यो वा कुलीनो वेत्यर्थः। अदेवः देवादन्यो वा पिशाचासुरराक्षसादिकः-उद्गीथ ॥ २७. [ ५ ] कुत्सस्याहवं। कुत्सस्य हवं-शा. ब्रा; जै. ब्रा.। २८. अभ्यवदत्—०मॅ-मु। न्यवदत्-ग-त-म ॥ ३०. प्रादुद्रवदिति—ग-०मॅ। प्रादुद्रवदिमपि-त; प्रादुद्रवदिति-त३ ॥ ३२. वार्म्रीशतेन—०मॅ। व्रिशतेन-ग; वाम्रिशतेन-त; वाम्रिशतेन-म-मु। प्रादुद्रवदिति-म-मु। प्राद्रवत्-शाट्या ब्रा., जै. ब्रा. ॥ ३१. आहुतवन्ती—म६-०मॅ-मु। आहुयतातं-ग; आहुतवती-त१.२.६.७; आहुतवंती-त४.५; आहुतवंतं-त३-म। ताण्ड्य ब्रा. ९.२.२२ द्रष्टव्यम् ॥

[ १०. ३९. ] ४१०. [ ३ ] ऋतस्य। 'स्वरस्य' इति संहिता ॥ ४१. २८. [ ६ ] मे मम संयन्धिनमिममाह्वानम् (?) —§-मॅ-मु ॥ ४११. २०. [ ८ ] पुनः पुनरपि—ग-त३-म२.६। पुनरपि-त४-म१.४.७-मॅ-मु ॥ ४१३. २१. [ १४ ] वां—त-म६-मु। ततो वां-त३-म१.२.४.७-मॅ ॥

[ १०. ४०. ] ४१४. २६. [ २ ] वन्दिनो वाणी कापा—त३-म२.६-मु। वंदीनो वरणी कापा-त१.४.६; वंदीनो वरणो कापा-त२.५; वंदिनो वाणी सापा-म१.४। वदिनो वाणी कापा-ग-०मॅ ॥ ४१५. ५. [ ४ ] युवां—ग-०मॅ-मु। युवं युवां-त-म ॥ ४१६. ४. [ ७ ] पराजीयमानं—ग-उद्गीथ। पराजयमानं-त-म-मॅ-मु ॥

[१०. ४२] ४२०. २२. [५] स्पन्द्रं स्पन्दनशीलं—ग-मु। स्पद्र स्पदनशील-त-भ-मे। 'स्पन्द्रम्' इत्येव संहितापाठः न 'स्यन्द्रम्'। ऋ. सं. १.१८०.९; ५.५२.३; ८; ८७.३; ६.१२.५ अत्रापि स्पन्द्र इति पकारयुक्त एव पाठः। नागरीलिपिलिखितपुस्तकेषु प्रायेण यकारपकारयोः साम्य दृश्यते। ऋ. सं. ६.१२.५ टिप्पणी द्रष्टव्या। 'स्पन्द्रम्' इत्येव उद्गीथभाष्ये॥ २५. पूर्वाह्णे-ग-॰मे। पूर्वाह्णः-त१.२.४.७; पूर्वाह्ण॰-त३.५-भ-मु॥

" [१०. ४३.] ४२२. २७. इति याज्ये—§-मे-मु। इति याज्या-आश्व. श्रौ.॥ ४२४. ११. [५] पूर्वोऽपि—ग-॰मे। पुत्रोपि-त-भ१.२.४.७, प्रत्नोपि-भ६। पुरातनोपि-मु॥ ४२५. ६. [८] पतयति—॰मे। पतयत् पतति-ग, पतयद्धि-त१.२.४.५.६; पतयत् गच्छति वि-त७; पतति-त३-मु; पति-भ१.२.४; पतयत् अपातयत्-भ६; तपति-भ७॥

[१०. ४४] ४२६. १७. [२] अस्मदभिमुखं—त-भ-मु। अस्मदभिमुखः-मे॥ २३. [३] नृणां—ग-त४.५-भ६। नृणां-त७-मु; नेतृणां-त१.२.३.६-भ१.२.४.७। नरां नेतृणां-मे॥ ४२७. १७. [५] अनाधृष्याणि—ग-भ२.६-॰मे। अनाधृष्यानि-त-भ१.४.७। अनाधृष्या अनाधृष्याणि-मु॥ ४२८. ८. [७] ये उपरे—॰मे-उद्गीथ। ये अपरे-§-मु॥ २०. [८] किंचेन्द्रो वृष्णः... . मदे सति—॰मे। लिखितपुस्तकेष्वशुद्धाः पाठाः। किंचेंद्रो वृष्णः स्वोदरस्याक्कृत् वर्षणशीलान् सोमान् पीत्वा मदे सति-मु। वृष्णः वर्षितृन् स्वोदकस्य सेक्तृ सोमान् पीत्वा मदे सति मत्तः सन्निन्द्रस्य॰-उद्गीथ॥

[१०. ४५] ४२९. १४. वत्सप्रिराग्नेयं—§-मे-मु। वत्सप्रीराग्नेय-अनु.॥ ४३०. ४. [२] घामानि—त१.२.६.७-मु उद्गीथ। धाम्नानि-त३.४.५-भ-मे॥ १३. [३] त्वा त्वां—§-मु। त्वां-मे॥ ४३१. ३. [४] द्यावापृथिव्यौ—त-भ२ ६.७-मु-उद्गीथ। द्यावापृथिवी द्यावापृथिव्यौ-भ१.४-मे॥ ५. क्षामां वै रेरिह्यमाणो—॰मे-मु। क्षाम वै रोरिह्यमानणं-ग; क्षामामा वै रेरिह्यमाणं-त१.२.४.५, क्षामा वै रेरिह्यमाणं-त६-भ॥ ४३२. २१. [९] सुम्नं—भ२(प्रान्ते),७-॰मे-उद्गीथ। द्युम्नं-ग-त-भ१.४.६-मु॥ ४३३. २. [१०] जनिष्य-माणैः—ग-त-भ६-मु-उद्गीथ। जनयिष्यमाणैः-भ१.२.४-मे। जैनिष्यमाणैः-भ७॥ १६. [१२] अस्य मन्त्रस्योद्गीथभाष्यमधो दीयते—अस्ताबि स्तुतोऽग्निः। नरां मनुष्याणां सुशेव. बहूपकारित्वात् सुमुखः वैश्वानरः विश्वेषां नराणां नेता कर्मसु प्रवर्तयिता विश्वेषां नरैर्यागार्थं नीयमानः विश्वानरस्य वा अपत्यभूतः ऋषिभिरस्माभिः सोमगोपाः सोमस्य रक्षिता रक्षआदिभ्यः। इदानीं कृतकृत्याः सन्तो वयं अद्वेषे द्वेषरहिते अस्माकमुपरि परस्परतो वा द्यूते द्यावापृथिवी हुवेम आह्वयाम नश्रयद्दष्टा-दृष्टफलदानायास्मभ्यं यूयमपि हे कर्माङ्गदेवाः अग्निसहिता॰ धत्त दत्त रयिं धनं दृष्टादृष्टफललक्षणं अस्मे अस्मभ्यं सुवीरं सुपुत्रसहितं॥

## अष्टमोऽष्टकः

अष्टमाष्टकभाष्यसंशोधनार्थमुपयुक्तानि लिखितपुस्तकानि-ग (१,२,४), त (१,२,३,४,५,६,७,८), भ (१,२,४,५,६,७,८)॥

[१०. ४६] ४३५. ८. अनुवर्तनात्—ग१.२-त१.२.३.७-मु। अनुवर्तमानात्-ग४-भ-मे॥ १६. [१] वेत्ता—त१.२.३.४.५.७-॰मे-मु। ज्ञाता-ग-त६.८-भ१.४.५.६.८;

शानं–म२ ॥ १८. यद्वा अपां अपसामित्यर्थः—०मं । अपसामित्यर्थः–ग१.२–त१.२.३.७.८–म; यद्वा अप इति ( 'इति' नास्ति–त४ ) कर्मनाम अपसामित्यर्थः–ग४–त४; अपां समीप इत्यर्थः यद्वा ( 'यद्वा' नास्ति–त५ )–त५ ६ ॥ ४३६. १. [ २ ] चतति°—ग४–त१.२.३.६.७.८–म–मु । चरति°–त४; चसति°–त५ । चति°–ग१.२–मं ॥ स्तोत्रैर्वा इच्छन्त आत्मन इच्छन्तः—०मं–मु । स्तोत्रैर्वा इच्छंतैः अनमिषंतो–त१; स्तोत्रैर्वा इच्छंतः आत्मानं इच्छंतः–त२.६–म६; स्तोत्रैर्वा इच्छंतः अनमिषंतो–त३.७; वा इच्छंतः आत्मानं इच्छतः–त८–म१.२.४.८; स्तोत्रैर्वा अमिमिच्छतः अनिमिषंता–त४; स्तोत्रैर्वा इवतः अनिमिषंता–त५ ॥ २०. [ ४ ] नेतारं प्रापयिता-रमरतिं गन्तारं–त४–०मं–मु । नेतारमरतिं गंतारं–ग–त८–म; नेतारं प्रापयितारं–त१.२.३.५.७; नेतारं–त६ ॥ २८. [ ५ ] जेतव्यान् शत्रून जयन्तं–०मं । जेतव्यं–ग–त८; जेतव्यान्–त१.२.३.४.५.६.७–म–मु ॥ २१. [ ५ ] भूर्जयन्तमित्येकपदं मत्वा—ग१.२–०मं–मु । भूर्जयतमित्येकपदमिति मत्वा–ग४–त६.८–म, भूर्जयतमित्येक पदमिति कृत्वा–त१.२.३.४.५; भूर्जयंतमित्येकपदं कत्वा–त ७ । उद्गीथभाष्यस्य अयमेक एव निर्देशः सायणभाष्ये । 'भूः भूरादीन् लोकानित्यर्थः अत एव च महा महांत विपोषां...' इत्यादि उपलभ्यमानोद्गीथभाष्यलिखितपुस्तके । 'जयन्तम्' इति पदस्य व्याख्यानाभावात् भाष्यमिदं त्रुटितं दृश्यते । तथापि 'भूः' इति पदस्य व्याख्यानात् सायणोक्तेः सत्यत्वं प्रतीयते ॥ ४३७. १७. [ ६ ] कर्मणा यन्त्रैः—मु । 'अयन्त्रैः' इत्यस्य स्थाने 'यन्त्रैः' इति भाष्यकारैः पठितम् । कर्मणायंत्रैः–मं । अयन्त्रैः अयमनैः गमनप्रतिबंधरहितैः स्वर्गमार्गैः–उद्गीथ ॥ २६. [ ७ ] श्वैतिमानमञ्चन्तः—ग४–म६.८–०मं–मु । श्वैतिमानमन्वमंचतः–ग१.२; श्वितिमानगवंत–त१.२.३; श्वितिमानमांचत–त४; श्वितिमानवसंत–त५; श्वितिमानमर्चतः–त७; श्वैतिमानमवतः–त८; श्वैतिमानमवंतः–म१.४.७; श्वैतिमानमवंतः–म२ । ऋ. सं. २.३३.८ भाष्ये 'श्वितीचे' इति पदस्य व्याकरणप्रक्रिया द्रष्टव्या ॥ श्वेतं–ऽ–मु । श्वेतः–मं ॥ ४३८. १५. [ ९ ] किंच ईलेन्यं—ऽ–मु । ईलेन्यं–मं ॥ यमग्निं—ऽ–मु । अग्नि–मं ॥

[ १०. ४७ ] ४३८. २९. बुद्धयेन्द्र—ग–त६–म । बुध्यद्र–त८ । बुध्द्वेंद्र–त१.२.३.४.५.७–मं–मु ॥ ४३९. २६. [ ३ ] धनं च—ग–त–म१.४–मु । धनं–म२.६.७.८–मं ॥ ४४०. ११. [ ६ ] जिगाति अभिगच्छति—ग–त–म१.२.४.५.६.८–मु । जिगाति–म७–मं ॥ ४४१. ४. [ ७ ] हृद्द्युभ्यां ङेरुपसंख्यानमिति सप्तम्या अलुक्—त–म१.२.४.६.८–मु । ङेरुपसंख्यान-मिति सप्तम्या अलुक्–ग; दद्द्युभ्यां ङेरुपसख्यानमिति–म५ । हृद्द्युभ्यामित्युपसख्यानात् ङेरलुक्–मं । १२. [ ८ ] दद दाने—ऽ–मु । ददातेः–मं ॥

[ १०. ४८ ] ४४२. २ [ १ ] हविषो दात्रे—ग–त१.२.३.४.५.६.८–म२.४.५.६.८–मु । हविर्दत्रे–त७ । दात्रे–म१.७–मं ॥ ११ [ २ ] तदत्रोच्यते—ग–मु । तत्रोच्यते–त–म–मं ॥ २४ [ ३ ] सेनासमूहं । समूहशब्दस्य नपुंसकलिंगप्रयोगश्चिन्त्यः ॥ कुर्वन्ति—ग–त१.२.६.८–म । कुर्वंते–त४–मं । मु–पुस्तकेऽस्य मन्त्रस्य भाष्यमेवम्–मह्यं मदर्थं त्वष्टा देवः आयसमयीमयं वज्रं आयुधं अवयत् संपादितवान् । अपि च देवाः मयि विषये क्रतु यज्ञ अवृजन् कुर्वंति मम अनीकं अश्वादि सूर्यस्येव रश्मिरिव दुस्तरं दुरवगाहं । किंच कृतेन निष्पादितेन कर्त्वेन वृत्रवधादिरूपेण कर्मणा उपलक्षितं मां सर्वे अर्यति गच्छंति ॥ अर्यमाश्विरं—त–म । आर्यमाश्वरं–मं ॥ ४४३. १५. [ ९ ] मर्वस्य

धनस्य—ग-त-भ२.४.५.६.८-मु। धनस्य-म१.७। धनस्य सर्वस्य-मॅ॥ ४४४. १० [७] यथा—ग-°मॅ-मु। त-भ-पुस्तकयोः 'यथा' नास्ति॥ जीर्णव्रीह्यादिस्तम्भान्—त३-°मॅ। जीर्णकद्यादिस्तभान्-ग; जीर्णव्रीह्यादिस्तभान्-त; जीर्णव्रीह्यादिस्तभनात्-म। निष्पावजीर्णव्रीह्यादिस्तवान्-मु॥ २१ [८] उत वा अपि च—ग-त-भ१.२.४.५.६.८-मु। उतावपि च-भ७। उतापि च-मॅ॥ २८ [९] आथर्वणीयः सन्—त-भ१.२.४.६.८-मु। आथर्वणीयः-ग-भ७-मॅ॥ ४४५. १४ [१०] अस्था अस्थना—त८-म१.२.६। अस्था अस्थना न-त६; अस्था अस्था-म४.७.८। अस्था-ग-त१.२.३.४.५.७-मॅ-मु॥

[१०. ४९] ४४६. २१ [३] सुखवासाय—§-मु। सुखार्थं-मॅ॥ ४४७. १७ [५] 'अकरम्' इति पदपाठः। 'करम्' इति भाष्यकारैः स्वीकृतमिति व्याकरणप्रक्रियया स्पष्टम्। अकर कृतवानस्मि-उद्गीथ॥ १८ अरन्धयं वशमनयम्—त-मु। अरंधय वश गमय.-ग१.२, अरधय वशमगमय-ग४। अरधय-भ-मॅ॥ २५ [६] अनुपक्तः—ग-त६.८-म६.८-मु। आनुपक्तः-त१.२.३.४.५.७-म१ २.४.७-मॅ॥ ४४८. ७ [७] ऋधगित्ययं—त५.६.८-म। ऋधगित्यन्वयं-ग-त१.२.३.४.७-मॅ-मु॥ १२ [८] सप्तहा सप्त°—ग-त१.२.३.४.५.७-मु। सप्त°—त६.८-भ-मॅ॥ शत्रुपुरां—ग-त२.३.४.५.६.७.८-भ४.५.६.८-मु। शत्रुपुरा-त१-म२; शत्रूणां पुरां-भ१; शत्रूणां पुरां वा-भ७। पुरां शत्रूणां वा-मॅ॥ १६ अडभाव.—त-भ-मु। अडभावश्छांदसः-ग। अडभाव आर्ष-मॅ॥ २३ [९] स्रवतीः—§। स्रवतीः (?)-मॅ-मु। स्रवतः नदान् सिंधुलोहितप्रभृतीन्-उद्गीथ॥ २६ अलम्भयम्—मु। लेभेय-ग१.२; लभयं-त-भ१.२.४.५.६.८; लभंय-ग४; लभय-त३-भ७। अलभ-मॅ। लिखितपुस्तकपाठसादृश्यात् मु-पाठः स्वीकृतः। 'अलभे' इत्यपि सम्भवेत्। विद्वज्ञवानस्मि-उद्गीथ॥ २७ पुषादि° इत्यादिना—भ१.२.४.६.८-मु। पुष्पादीत्यादिना-भ७; पुषादित्यादिना-त। पुषादित्वात्-मॅ। दिवादौ लाभार्थे विद्धातुर्नास्ति॥ ४४९. ६ [१०] आगामिवर्षासमय°—ग४-त१.२.३.४.७.८-भ१.२.८-मु। आवर्षसमय°-भ७। आगामिवर्षसमय°-त५-मॅ॥

[१०. ५०] ४४९. ११ सप्रर्चं—ग-त-भ२.६-मु-उद्गीथ। अप्रर्चं-भ१.४.७.८-मॅ॥ ३० [१] सांहितिको दीर्घः—§-मु। दीर्घः-मॅ॥ ४५१. ५ [४] विश्वस्मिन् सर्वस्मिन्—ग-त-भ४.५.६-मु। विश्वस्मिन्-भ१.७-मॅ॥ ६ भुवः—§-मु। अभवः-मॅ॥ १६ [५] अम गत्यादिषु...छान्दस उमादेशः—°मॅ। लिखितपुस्तकेष्वशुद्धाः पाठाः। अम गत्यादिषु औणादिक अन्नप्रत्ययः छांदस ऊमादेशः-मु॥ १८. एता एतानि—ग-त-भ१.६.८-मु। एतानि-भ१.२.४.७-मॅ॥ २४ [६] सर्वाणि सवना—त-मु। सवना सर्वाणि-मॅ॥ ४५२. ५ [७] स्तोत्रकर्तारो—त-म-मु। स्तोत्रकृतो-मॅ॥

[१०. ५१] ४५२. २८ [१] तन् प्रावरणं—ग१.२-त-भ-मु। तत्र प्रावरण-ग४। प्रावरण-मॅ॥ तत्तत्—त-भ-मु। तत्-मॅ॥ ४५३. १ जातप्रज्ञ ते—ग-त-भ१.२.४.६.८-मु। ज्ञातप्रज्ञान-भ७-मॅ। 'ज्ञ ते' इति पुस्तमात्रालेखनरीत्या 'ज्ञात' इति स्यात् नतयोश्च सादृश्यम्॥ १८ [३] अप्रविष्टं—त६.८-म५.६। प्रविष्टं-ग-त१.२.३.४.५.७-भ१.२.४.७.८-मॅ-मु॥ २७ [४] देवा—ग-त-भ१.२.४.६.८-मु। देवगणा-भ७-मॅ॥ २९ हविर्वहने—ग४-त२.७-

म१.४.६.७। हविर्वहनप्रयोजने–त४.५-मॅ-मु ॥ नैव योजयन्तु—त६-मु। नैव योजयंत–ग-त२.३.७-म१.२.४.५.८; नैवायोजयंत–त१; नैव योज्यतो–त४; नैव योजयंतो–त५; नैव योजयत–त८-म६; नैव योजयंतु–म७। मैव योजयंत (!)–०मॅ ॥ ४५४. १ [५] त्वं तु—ग-त१.२.३.४.५.६.७-म-मु। त्वं–त८-मॅ ॥ १२ संमत्या। सम्मित्य–मु। 'तव संमत्या' इति समीचीनमिति मॅ-मतम् ॥ १२ वह च—ग-त१.२.३.६.७.८-म१.५.६.८-मु। वह–त४.५-म२.४.७-मॅ ॥ २१ [६] शृणोति—§-मु। शृणुते–मॅ ॥ २३ गौरो न गौरमृग—ग-त३.६.८-म४.५.६-मु। गौरा न गौरमृग–म८; गोरो न गौरमृग–त१.२; गोरो न गौरमृग–त७; गौरमृग–म१; गौरो मृग–म७। गौरो न मृग–मॅ ॥ ३० [७] युक्तः—§। युग्मः–मु। तथा–मॅ ॥ संयुक्तः—त१.२.३.६.७.८-म-मु। युक्तः–ग-त४.५-मॅ ॥ ४५५. ८ [८] प्रतिजानाति। प्रति + ज्ञा इत्यास्मिन्नेतदो धातुः ॥ १४ तस्मादाहुराग्नेयाः……। 'तस्मादाहुराग्नेयाः प्रयाजानुयाजा आग्नेयमाज्यमिति' इति शाङ्खायनब्राह्मणम् (१.२)। 'शरीरदाया ह वा अग्नयो भवन्ति' 'पुरुषाहुतिर्ह्यस्य प्रियतमा' इति वाक्यद्वयं नोपलब्धम्। 'प्रियतमा' अस्य स्थाने 'प्रदतमेति' इति मु-पाठः ॥

[१०. ५२] ४५६. १४ [२] आहुतिर्भवति भवत्वित्यर्थः—त४.५.७-म४-मु। आहुतिर्भवति भवतुमित्यर्थः–ग। आहुतिर्भवत्वित्यर्थः–त६.८-म१.२.७.८-मॅ। प्रादुर्भवति भवत्वित्यर्थः–त१.२.३ ॥ १५ तदेवोभयं भवतीति—०मॅ। तदेव भयवतीति–ग; तदेवाभयंतीति–त१.२.३ ८; तदेवाभय भवतीति–त४.५; ते देवा भयंतीति–त६-म२.८; तदेवा नयंतीति–त७; तदेवा भवंतीति–म४। तदेवोभयंतीति–मु। एतच्छन्दोगब्राह्मणवचनमन्वेषणीयम् ॥ २१ [३] स्वात्माने—ग-त१.२.३.४.६.७.८-म-मु। आत्माने–त५-मॅ ॥ ४५७. ७ [४] कल्पयाति कल्पयति—म१.६-मु। कल्पयति–ग-त१.५.६ ८-म५.७; कल्पयाति कल्पयति–त१.२.३.७। कल्पयाति–म१.२.८-मॅ ॥ २५ [६] मह्यं—§। मह्यं च–मॅ-मु ॥

[१०. ५३] ४५७. २८ दुवृतस्य—ग-त१.२.३.५.६.७.८-म१.२.४.५.६.८-मु। वृतस्य–त४-म७-मॅ ॥ ४५८. ६ [१] जानंस्तथा—त-म४-मु। जानन्–ग। तथा–म१.२.६.७.८-मॅ ॥ ८ नि पत्साद्धि—मु। नि षद्धि–त१.२.३.७-म१.२.६; नि पत्संधि–म७; नि षद्धि–म८। नि हि पत्सत्–म४-मॅ ॥ २१ [३] जीवति मृतशब्दो जायते तस्य—०मॅ। जीवति सति मृतप्रजा जायते तस्य (तस्याः–त४.५)–ग-त४.५; जीवति सति प्रजा जायत (जायते–त६-म६) तस्याः–त१.२.३.६.७.८-म५; जीवति सति प्रजा अजायते तस्याः–म४; जीवति प्रजाया जायते तस्या–म१.२.७.८। जीवति सति मृतशब्दो जायते तस्य–मु। ऐ. ब्रा. ७.१; ऋ. सं. ५.१.६ भाष्ये च द्रष्टव्यम् ॥ २१ [३] गुहां—ग-त-म१.२.४ ६.८-मु। जिह्वां गुहां–म७-मॅ ॥ ४५९. २७ [६] आन्यन्तराले श्वाविक्रमणे—०मॅ-मु। अग्निवराले श्वाविक्रमणे–त१.२.३.७; अस्यंतराले श्वाविक्रमणे–त५; अग्निरोले श्वाविक्रमेण–त६.८-म१.६.८; अग्निरोले श्वाभिक्रमेण–म२; अन्यंतराले श्वाविक्रमेण–म४; अग्निरोवेधाभिक्रमेण–म७ ॥ २८ मध्यं—त१.२.३ ६.८-म-मु। मध्ये–त४.५.७-मॅ ॥ च पूरयेत्—त१.२.३.६.७.८-म-मु। वापूरयेत्–त४.५। चापूरयेत्–मॅ ॥ ४६१. १ [८] सं रभध्वम्—इति न व्याख्यातम् ॥ ४६२. १ [११] ते मरुतो। 'ते श्रमतो' इति मु-पाठो दुष्टः। 'चर्माणि' इत्यस्यानन्तरं 'वा' इति मु-पुस्तकेऽधिकम् ॥

[१०. ५४] ४६३. ९ [३] केऽपीत्यर्थः—ग-त६-८-म-मु। कोऽपीत्यर्थः (?)--त१. २.४.५.७-मॅ ॥ १० मातरं च—§ मु। मातरं--मॅ ॥ १८ [४] उत्तरसूक्त उपान्त्यवर्जिते—*मॅ-मु। उत्तरसूक्ते उपान्त्यवर्जितेषु--त४.५; उत्तरसूक्ते उपेत्येवर्जितेषु--त१.२.३.७; उत्तरसूक्तेषु उपान्त्यवर्जितेषु--त६.८-म; उत्तरसूक्ते उपान्त्यवर्जितेषु दूरे तन्मामेत्यादिचतसृषु मतृषु--ग॥ १९ वेरिस--ग-त-म१.२.४.६.८-मु। अदाभ्यान्यहिंस्यानि वेरिस--म७-मॅ॥ ४६४. १० [६] °मधुरद्रव्याणि— ग-त६.८-म८-मु। °मधुद्रव्याणि--त३.४.५-म१.२.४.७-मॅ॥

[१०. ५५] ४६४. २२ [१] सती—§-मॅ। सत्यौ--मु॥ अवेत्यन्नूनां—*मॅ। आह्वावत्यौ--ग, अह्वेत्यन्नूनां--त-म। मु-पुस्तक एतन्नास्ति॥ ४६५. १५ [३] आपृणात्—त-म-मु। अपृणात्--ग-मॅ॥ १६ °रक्षःसंज्ञकान्—ग-त१.२.३.४.५.७-म१.२.७-मु। रक्षस.संज्ञकान्--त६-म४.६.८; रक्षससंज्ञकान्--त८। राक्षससंज्ञकान्--मॅ॥ २९ [४] यच्च—ग-त१.२.३.४.७-म१ २.४.७.८-मु। या--त५.६.८; यदा--म६। यद्वा--मॅ॥ ४६६. १० [५] अननमनः प्राणनं—*मॅ-मु। अननिः प्राणन--ग१.२; अनने अनः प्राणन--ग४; अनेनमनः प्राणन--त१.२. ३.४.५.७-म२.४.६.८; अमनेन मनः प्राणन--त६; अननः प्राणनं--त८, अनेनमनः प्रीणन--म१. ७॥ १३ अद्य—ग-त३.४.५.७-म मु। अय--त१.२.८-मॅ॥ २३ [६] सुपर्णरूपकेण—त-म-मु। सुपर्णरूपेण--ग-मॅ॥

[१०. ५६] ४६७. १७ वाय्वादि°—त१.२.३.७-म७-मु। वाय्यादि°--त४.५.६.८-म१.२.४.६.८-मॅ॥ ४६८. २ [१] यत्सूर्यः—ग-*मॅ-मु। ये सूर्य--त-म१.२.४.६ ८; यः सूर्य--म७। अस्याः श्रुतेर्मूलमन्वेषणीयम्॥ ४६९. २४ [६] संग्रन्थिनं—§-मॅ-मु। 'संग्रन्थि' इति भाष्यम्॥

[१०. ५७] ४७०. १२ एतस्मादनुक्रमणीसूत्रात्पूर्वं विद्यमानः 'पराणि चत्वारि सूक्तान्युक्ता ऋषयो द्वंपदे त्वत्रिमण्डले' इतीशनग्रः भाष्यकारैर्नोद्धृत इति दृश्यते॥ २३ [१] लिखितपुस्तकेषु वर्तमानाः शाट्यायनकब्राह्मणपाठभेदा मॅक्समुल्लरमहाशयैः सोद्धार विचारितास्ते तदीयायां टिप्पण्यां द्रष्टव्याः॥ २३ [१] अभ्यगमंस्ते। अभ्यदार्थस्ते--शाट्या ब्रा.; जै. ब्रा.। २४ तं ह स्मानग्नौ निधाय। तौ ह स्मानग्नावधिधाय-शाट्या. ब्रा.; जै. ब्रा.॥ पचतोऽग्नौ। पचतोऽनग्नौ--शाट्या. ब्रा, जै. ब्रा.। पचते नग्नौ--ग॥ २५ असुरान्न दग्ध्वा। असुराग्न जग्ध्वा--शाट्या. ब्रा.; जै. ब्रा.॥ २६ आवां। आव--शाट्या. ब्रा., जै. ब्रा.॥ २७ [६] 'अथ ह्याततन्तुर्वैप्रजाः' इति ब्राह्मणवाक्यस्य मूलं नोपलब्धम्॥ २७ न्वेता नाभितपन्तीति। त्वैता नाभितप्स्यन्तीति--शाट्या ब्रा.; जै. ब्रा.॥ २८ आहुत्य। आहृत्य--शाट्या. ब्रा ; जै. ब्रा.। समाहृत्य--ग। २९ मा प्र गाम—§। प्र गाम--मॅ-मु॥ ४७१. २ [२] साधयिता देवेष्वाततः—ग-त-मु। साधयिता--म-मॅ॥ ३ प्राप्नुयाम—*मॅ। प्राप्नोमि--ग-त१.२ ३.७, प्राप्नुमः--त५; प्राप्नोति--त६.८-म। व्याप्नुयाम--मु॥ ५ [३] च तिसृभिः--मु-आश्व. श्रौ। चतसृभि.--§-मॅ॥ ८. आ हुवामहे आह्वयामहे—ग४-त१.२.३.४.५.७-मु। आ हुवामहे--ग१.२-त६.८-म-मॅ॥ ११. मन्मभिश्च—§-मु। मन्मभिः--मॅ॥ १५. [४] क्रत्वेऽपानाय दक्षाय प्राणाय—*मॅ। क्रत्वे प्राणनाय दक्षाय अपानाय (अपाननाय--ग४) च--ग-म८; क्रत्वे प्राणनाय दक्षाय अपाननाय--त४.५-म४; क्रत्वे प्राणनाय अपाननाय--त१.२.३.७ मु; क्रत्वे प्राणनाय दक्षाय अपानाय--त६-म६; क्रत्वे--त८;

क्रत्वे प्राणाय अपाननाय–म१; क्रत्वे प्राणानाय दक्षाय अपाननाय–म२; क्रत्वे प्राणाय अपानाय–म७ ॥ १६. ज्योक् चिरकालं सूर्यं च दृशे सूर्यं द्रष्टुं—ग-त-भ-मु। ज्योक्च चिरकालं सूर्यं दृशे सूर्यं द्रष्टुं–मॅ ॥ २०. [ ५ ] 'पितरः' इति पदं भाष्यकारैः संबोधनान्तस्य स्थाने प्रथमान्तं गृहीतं दृश्यते। तथा च 'मनः' इत्यस्य स्थाने 'जनः' इत्यपि स्वीकृतम् ॥ २७. [ ६ ] युक्ताः सन्तः—ग-त-म५.८-मु। युक्ताः–म१.२. ४.७-मॅ ॥

[ १०. ५८ ] ४७२. ७. [ १ ] °जीवनाय—§-मु। °जीवनायेत्यर्थः–मॅ ॥ ४७३.१. [ ५ ] तदिति गतम्—त-भ-मु। तदावर्तयामः–मॅ ॥

[ १०. ५९ ]. ४७५.६. [ २ ] अत्रापि न्विति—मु। अत्रान्विति–§। अत्र न्विति-मॅ ॥ *जीर्णा स्तुता वा—ग-त३-म२.८-°मॅ। जीर्णा स्तुति– त१.२.७; जीर्णा स्तुतिर्वा–त३.६.८-म;* जीर्णा स्तोता वा–त४.५। जीर्णा स्तुता-मु ॥ ९. गच्छतु—ग-त३.४.५-मु। गच्छतां–त१.२. ६.७.८-भ-मॅ ॥.२३. [ ४ ] मा कार्षीः—त१.२. ३.म-मु। नोऽस्मान् मा कार्षीः-ग-त७-मॅ ॥ २४. सूर्यदर्शनासंभवात्—ग-त१.२.३.६.७.८-भ१.२.४.६.८-मु। सूर्यसंदर्शनासंभवात्–त४.५; सूर्यदर्शनात्–भ७। सूर्योदर्शनात्-मॅ ॥ ४७६. ३. [ ५ ] चिरसंदर्शने—त१.२.३.७-°मॅ-मु। चिरसंदर्शन-ग-त४.५.६-म ॥ वर्धयस्व वर्धय—ग-त४.५.७-म१.२.७-मु। वर्धयस्व वर्धयस्व–त१.२.३; वर्धय वर्धय–त६-म४.८। वर्धय वर्धयस्व–मॅ ॥ ९. [ ६ ] प्राणं पुनः—त-भ-मु। पुनः प्राणं–मॅ ॥ ४७७. ५. [ ८ ] रपः—त१.२.३.७-म६.८-मु। परः–म१.२.४; परं–भ७। पर रपः-मॅ ॥ ६. हिनस्तु—त१.२.३.७-म४.६-८-°मॅ-मु। हिनस्ति-ग-त४.५; हिनस्तु–त६.८; मा आगच्छतु–म१.७ ॥ १५. [ ९ ] परिरक्षन्तु—§-मु। रक्षंतु-मॅ ॥ २१. [१०] समीरय संप्रेरय—भ६-मु। संप्रेरय समीरय–त-भ१.२.४.७.८। समीरय प्रेरय–ग-मॅ ॥

[ १०. ६० ] ४७७. २८. स्पर्शनहेतुभूतो देवता। °भूतो हस्तो देवता इति पाठं मॅक्समुल्लरमहाशया अभ्यूहन्ति ॥ २९. पश्चाधा—मु-अनु। पश्चाम्याधा–त-मॅ ॥ ४७८. २८. [ ५ ] अनयेन्द्रमाह्वयतेऽसमात्यर्थे—°मॅ। *अनयेंद्रमाशते समत्यर्थे–ग; अनयेंद्रमासते असमात्यर्थे–त१.२.* ३.६.८-भ६; अनया इंद्रस्य समासतेत्यसमात्यर्थे–त४.५; अनया इमासते असमात्यर्थ–म१.२.४; *अनया समासिषु असमात्यर्थ–भ७; अनया इंमासते–भ८। अनयेंद्रमाशासते असमात्यर्थे–मु ॥* ३०. दर्शनाय—ग-त-म१.२.४.५.६.८-मु। संदर्शनाय-भ७-मॅ ॥ ४७९. १३. [ ७ ] गपान्तः°। एषोऽग्रः°–शाट्या, ब्रा., जै. ब्रा. ॥ सुप्रीतस्तस्थौ—§-मॅ-मु। *समोळ्हस्तस्थौ–बृहदे ॥* १४. गौपायनानभि—त६.८-°मॅ-बृहदे। गोपायनाविभि–ग; गोपायनानिति–त१.२.३. ७, *गोपायननभि–त४.५; गोपायनानभि–म२.४.६.७.८। गोपायनानिति–मु ॥* १५. सूक्तेन ते—§-मॅ-मु। सूक्तेनाप्य–बृहदे ॥ १५. द्वैपदेन यथाविधु—°मॅ-मु-बृहदे। द्वैपदसूक्तेन स्तुवन् *येद्वदचिधु–ग,* द्वैपदं यद्वदविधु–त१.२.३.६.७.८-म; द्वैपदं यद्वमविधु–त४.५ ॥ *अथाग्निरब्रवी°–* §-मॅ-मु। अग्निरप्यब्रवी°–बृहदे ॥ १६. चेक्ष्वाको°–§-मॅ-मु। चैक्ष्वाको°–बृहदे ॥

[ १०. ६१ ] ४८१. ६. सूक्ते शंसय से—ग२-त६-भ६-°मॅ। सूक्ते संयते–ग१-त१. २.३.७; सूक्तं संयते–त४.५; सूक्ते सस्तूयते–म१.२.७; सूक्ते संयते–म८। सूक्ते संयच्छते-मु ॥

८. यज्ञं पारं प्रापय्य–ॅ*मॅ। यज्ञपंर पारं प्रापय्य–ग-त-म८; यज्ञपारं प्राप्य–म१.२.७; यज्ञपारं प्रारय्य–भ४; यज्ञस्य परं पार प्रापय्य–भ५.६; यज्ञ पर पार प्रापय्य–मु ॥ ९. तं च–भ६-*मॅ-मु । ते च–ग-त-भर.८ ॥ २२. [ १ ] तेन नाभानेदिष्ठ.—*मॅ-मु । तेनार्यं नाभानेदिष्ठ:–ग; तेन यज्ञाभानेदिष्ठ:–त-म ॥ २५. यज्ञं पारं । यज्ञपारं–§-मॅ-मु । सूक्तप्रस्तावना द्रष्टव्या ॥ ४८२. ३. [ २ ] यथा घनः--*मॅ-मु । यथा घनं–§ ॥ १६. [ ३ ] आदिशम् आदिश्य–ग-त४.५-भ६-मु । आदिशे आदिश्य–त१.२.३.७; आदिश्य–भ । आदिश–त६.८-मॅ ॥ ४८३. १ [ ५ ] अस्तेः सिपि – – – –मॅ । अस्तेः तिपि लोपः–ग, अस्तेः सिपि रूप–त४-मु । अत्र भाष्यांशो लुप्त इति विस्पष्टम् । ऋ. स. १०. १२९. ३ भाष्ये 'आः' इत्यस्य व्याकरणप्रक्रिया द्रष्टव्या ॥ २५. [ ७ ] रोहितं भूतामृश्यो भूत्वा—मु । रोहितां भूतां मृश्यो भुवा–ग; रोहिता भूतामृश्यो भूवा–त१.२.७; रोहिता भूतां मृश्यो भूता–त३.४.५; रोहिता भूतां–त६.८, रोहिता मूत्वा–भ१; रोहिता–भ४; रोहिता भूता–भ६.८ । रोहितो मूत्वा–भ२-मॅ ॥ ४८४. ५. [ ८ ] गोनिरोधायागच्छन्तं—मु । गोनिकरायागच्छत–ग; गोनिरोपागच्छतं–त१.२.३.७; गोभिरोच्चागच्छंत–त४.५; गोनिरोपगच्छत–त६.८; गोनिरोयछत–भ१.४; गोनिरोधायागच्छतं–भ२ । गा निरोधयंतं–मॅ॥ ८. यः कश्चिन्–ग१.२-*मॅ, किंच–ग४-त४.५, यं किचि–त१.२.३.७.८–म८, य किंचित्–भ१.४.६; यं कचि–भ२; यं किंच -त६ । मु-पुस्तके 'यः कश्चित्' इति नास्त्येव ॥ २१. [ १० ] ऋतयुक्ति–ग४-त-भ१.२.४.६.८-मु । ऋतयुक्तिमग्मन्–ग१.२-भ७-मॅ ॥ ४८५. २. 'अदक्षिणानि सत्राणीत्याहुः' 'ये यजमानास्त ऋत्विजः' इति वाक्यद्वयं कुत उद्धृतम् ? ॥ १०. [ ११ ] हे इन्द्र—§-मॅ-मु । 'हे रुद्र' इति भाव्यमिति–मॅ-मतम् ॥ २०. [ १२ ] स्तोता इति—त४ । स्तोत्रकर्ता–ग१.२, तेतेति–त१.२.३.६.७.८-म२.८, तेते–त७, ते इति–भ१; तेति–म६; वि–भ४, इति–ग४-भ७-मॅ-मु ॥ ४८७. १. [ १६ ] रेजयत् अकम्पयत्—त१.२.३.७-भ६-मु । रेजयत् कपयत्–त४.५ । रेजयत्–ग४-त६-भ१.२.४.७.८-मॅ ॥ स एवाग्नि—*मॅ-मु । स एवाग्निः–त१.२.३.६.८-म, सोम एवाग्निः–त४.५.७ ॥ अशक्तं सन्तं—*मॅ-मु । अशक्तः सन्--§ ॥ २. रेजयत्—त१.२.३.७–भ४.६.८-मु । रेजयत् अकपयत्–ग४-भ१.२,७-मॅ ॥ २०. [ १८ ] सूर्यापत्यत्वेऽपि पर्यवस्यति—मु । सूर्यापत्यमपि मित्येव पर्यवसाम्यति–त१.२.३.७-म१.२.८; सूर्यापत्यमित्येव पर्यवस्यति–भ४, सूर्यापत्यमपीत्येवं पर्यवसाम्यति–भ६ । सूर्यापत्यत्व पर्यवस्यति–भ७-मॅ ॥ ४८८. ५. [ १९ ] द्विजा......प्रथमजाः—*मॅ । द्विजाः ऋतस्य प्रथमजाः–ग; द्विजा ऋतस्य--त१.३.७; द्विजाः प्रथमजाः ऋतस्य–त२; द्विजा – – ऋतस्य प्रथमजाः–त४.५, द्विजा ऋतस्य प्रथमजाः सत्यप्रथमजाः–त६; द्विजा--ऋतस्य प्रथमजाः सत्यप्रथमजाः–त८; द्विजाः ऋतस्य प्रथमजाः सत्यस्य प्रथमजाः–भ१.४.७, द्विजा – – ऋतस्य तस्य प्रथमजाः सत्यप्रथमजा.–भ६, द्विजाः ऋतस्य तस्य – – सत्यप्रथमजाः--भ८ । द्विजा ब्रह्मांडजा ऋतस्य–मु ॥ १४. [२०] शिशुः शंसनीयः सेनेव--*मॅ । शिशुः सेनेव--ग; शिशुर्न सेनेन–त-भ४.८; शिशुर्न सोनेन–भ१.२.७ । श्रेणिर्न पिपीलिका पंक्तिरिवाहिं शिशुः शसनीयः–मु ॥ ४९०. १०. [ २६ ] अद्भिर्देवताभिर्देववान्—ग१.२-मु । देवताभिर्देववान्–त१, देवतातिर्देववान्–त७; देवताभिर्दवचने–त४.५; देवताभिर्देवान्–म७ । देवताभिर्देववान्–त२.

३.६.८-म१.२.४.८-मॅं । 'अङ्गिरब्देवताभिर्देववान्' इति स्यादिति मॅक्समुल्लरमहाशयैः संसूचितम् ॥ २०. [ २७ ] प्रापयथ—त१.२.३.६.७.८-म-मु । प्रापय-त४; प्रापय ये च-ग४ । प्रापयत-मॅं ॥ २१. असूरा अमूढाः—ग-त१.२.३.४.५.७-मु । अमूढाः-त६.८-म । असूराः-मॅं ॥

[ १०. ६२ ] ४९३. २० [ ७ ] तत्पुण्याय च कर्माणि—त१.२.३.७.८-म१.२.४.८-मु । तत्पुण्यानि च कर्माणि-ग१.२ । तत्पुण्याय च कर्मणि-ग४-त४.५.६-म७-मॅं । अयं श्लोको बृहद्देवतायां नोपलभ्यते । एवमेवाग्रममन्त्रप्रस्तावनायामागतः 'सावर्णिना' इत्यादिरपि ॥ ४९४. १३ [ १० ] गोपरिणसौ—०मॅं । 'गोपरीणसौ' इति मुद्रणदोषः । परिणडपद्य-§ । गोपरीणसौ परिणदपद्य-मु ॥

[ १०. ६३ ] ४९४. २९ चोत्तरया—ग४-म८-०मॅं-मु । चरया-ग१.२; सोत्तरया-त१.२.३.४.५-म२.४; वात्तरया-त६; उत्तरया-त७; वोत्तरया-त८; वोत्तरया-म१; वा सा रुद्दोत्तरया-म६ ॥ पृष्ठ्याभिप्लवषडहयोस्तृतीयेऽहनि वैश्वदेवशस्त्र एतत्सूक्तं वैश्वदेवनिविद्धानम्—त१.२.३.४.५.७-मु । पृष्ठ्याभिप्लवषड्हयोः तृतीयेहनि वैश्वदेवनिविद्धानं-ग१.२; पृष्ठ्याभिप्लवयोस्तृतीयेहनि वैश्वदेवनिविद्धान-त६-म४; पृष्ठ्याभिप्लवयोस्तृतीयेहनि वैश्वदेवे एतत्सूक्तं वैश्वदेव निविद्धानं (वैश्वदेवनिविद्धानं-त८-म६.८)-ग४-त८-म१.२.६.७.८-मॅं । ऋ. सं. १०.६६ सूक्तप्रस्तावना द्रष्टव्या ॥ ४९५. २० [ २ ] उत अपि च......भवन्ति—ग-त२.३.४.६.७.८-म१.२.४.५.८-मु । इदं नास्ति म७-मॅं-पुस्तकयोः ॥ ४९६. २ [ ३ ] स्तुतिबलान्—§ । अतिबलान् (!) -मॅं-मु ॥ ४९७. ४ [ ६ ] कः वा यजमानः । 'वः' इत्युत्तरार्धे पदम् । भाष्यकारैः 'वा' इति पठितम् ॥ ४९८. ८ [ १० ] उदयनीयायां—ग१.२-त१.४.५-म१.२.७-मु । उदनीयायां-ग४-त२.३; उदयनीया-त६.८-म४.६; उदनीया-त७; उदयनी-म८ । उदयनीयाया-मॅं ॥ ४९९. ८ [ १२ ] दुर्शन-§ । दुर्विशानं-मॅं-मु ॥ १५ [ १३ ] हे देवाः—ग-त-मु । हे श्व देवाः-म१.७ । हे विश्वे देवाः-म२.८-मॅं ॥ १९ सन्मार्गे नयथ—त१.२.३.६.७-म१.२.४.८ मु । सन्मार्गेण प्रापयथ-ग; सन्मार्गेण नयथ-त४ । सन्मार्ग नयथ-त८-म७-मॅं ॥ २५ [ १४ ] विनाश्यन्ते-ग-त१.२.३.६.७.८-म६.८-मु । विनश्यते-त४-म१.२.४.७-मॅं ॥

[ १०. ६४ ] ५०२. ८ [३] गन्तुमशक्यं—§-मॅं-मु । 'गुहितुमशक्यम्' इति स्यादिति मॅक्समुल्लरमहाशयानामभिप्रायः । अगोह्यमगूहनीयं सर्वजनप्रकाशमित्यर्थः-उद्गीथ ॥ ५०३. १० [८] सोमाभिषेकार्थे—ग-त६.८-म । सोमाभिषानार्थे-त२.३; सोमाभिधानार्थे-त७ । सोमाभिषवार्थे-त१.४.५-मॅं-मु ॥ ५०४. ३ [ ८ ] यज्ञपरिशिष्टस्वामिनं—ग-त४.५-म२.८-मु । यज्ञपरिशिष्टे स्वामिनं-त१.२.३.७ । परिशिष्टस्वामिनं-त६.८-म६-मॅं ॥ १४ [ ९ ] प्रयच्छन्तु—ग-त१.२.३.४.६.८-म । प्रयच्छतु-त५.७-म७ । प्रयच्छत-मॅं-मु । हे देवीः देव्यः आप......दत्तेत्यर्थः-उद्गीथ ॥ २२ [ १० ] सौधन्वनः—ग-०मॅं-मु । सौधन्वः-त१.२.३.७; सोधन्वः-त४.५; सौधन्व-त६.८-म ॥ २३ शंसमानस्य स्तोतुः—ग । शंसमान स्तोतुं-त१.२.३.६.७.८-म-मु; तत्समानं स्तोतुं-त४.५ । शंसमान स्तोतृन्-०मॅं । 'शंसमानान् स्तोतृन्' अथवा 'शंसमानस्य स्तोतुः' इति स्यादिति मॅक्समुल्लरमहाशयाः । अपरः पाठो लिखितपुस्तक उपलब्ध इति स्वीकृतः ॥ ५०५. ८ [ १२ ] हे मरुतः......दत्तवन्तः स्थ—मॅं-मु । हे इन्द्रादयो देवाः यां धियं यत्कर्म मे मह्यं

दाशुमिच्छथ हे मरुतः हे इंद्र ( इंद्रादयो-त४.५ ) देवा ( हे देवा-ग-म५ ) हे वरुण हे मित्र यूयमददात दत्तवतः स्य-§। पूर्वं माप्याशो हुत. स्मात्, अनन्तर केनापि प्रान्ते पूरितः पुरस्कृत्वस्थाने प्रविष्टः स्यादिति मॅक्समुल्लरमहाशयानामभिप्रायः ॥ १२ प्रापाः स्य—मॅ-मु। 'प्राप्नुथ' इति भाष्यमिति प्रतिभाति। 'वहाथ लोडर्थे लट् वहथ प्रापयथ यूयं'–उद्गीथ ॥ ५०६. १ [ १४ ] लटि—ग-त४.५। लिटि-त२.३.६.७.८-म२.८-मॅ-मु। भूते लट्–उद्गीथ ॥

[ १०. ६५ ] ५०७. ५ [ १ ] सजोषसः संगता सन्तः अन्तरिक्षं स्वमहिम्ना आपूरयन्तीत्युत्तरेण संबन्धः—त१.२.७-मु। सजोषसः सहत्वा-ग-त३.४.५-म१.२.४.६; सजोषसः-म७। सजोषसः सहत्व-मॅ। अस्य मन्त्रस्योद्गीथभाष्यमेव वर्तते—ऋत्वर्थे याददेवतानामानिर्देशार्थत्वात्। सजोषसः समानप्रीतयः समानसेवाः स्वर्वृहत्। चौर्महतीत्यर्थः। सोमोऽत्र चंद्रमाः ॥ ११ [ २ ] वृत्रहत्येषु वृत्रहननेषु युद्धेषु। यद्वा कर्मणि छान्दसः क्यप्। वृत्राणि शत्रवो हन्यन्तेऽत्रेति वृत्रहत्या युद्धानि—त१.२.७-मु। युद्धानि-ग-त३.४.५.६.८-म। वृत्रहत्या युद्धानि-मॅ। एतौ प्रथमद्वितीयमन्त्रभाष्यभागौ सायणाचार्याणामेव कृतिरिति विश्वसितु प्रमाणं नास्ति। परं मॅक्सुपिस्तुस्तकेषूपलब्धत्वात् सम्यगर्थकरत्वाच्च स्वीकृतौ। द्वितीयमन्त्रस्योद्गीथभाष्यं–इन्द्राग्नी सत्पती सतां पातारौ वृत्रहत्येषु वृत्रहनने शत्रुवधेषु निमित्तभूतेषु मिथः परस्परेण सहितौ हिन्वाना शत्रुवधाय गच्छन्तौ तन्वा शरीरेण। स्वयमेवेत्यर्थः। उभोक्ता सगतनिरासो अनन्तरितपृथिव्यन्तरिक्षस्थानी सोमस्य घृतश्रीः उदकलक्ष्मीरुदकसेव नोपा उदकाश्रया वा। महिमान महत्त्वमात्मानमीरयन् सर्वत्र सदा गमयन् वर्तेते। एते यथोक्ता देवा अन्तरिक्षमाकाशं महि महत् आपमुः आपूरयन्ति स ओजसा स्वेन बलेन महत्त्वलक्षणेन ॥ ५०९. ५ [ ७ ] वा देवाः। वा-ग-त१.२.३.६.७.८-म; देवा वा-त४.५-मॅ। देवा-मु। ऋतावृधः ऋतस्य सत्यस्य यज्ञस्योदकस्य वा वर्धयितारः-उद्गीथ ॥ ५१०. १९ [ ११ ] आकारलोपः– ग-त१.२.३.४.५.७-म६-मु। अकारलोपः-त६.८-म१.२.४.७.८-मॅ॥ २० व्रता व्रतानि—ग-त१.२.३.७-उद्गीथ। व्रतानि-त४.५.६.८-म-मॅ-मु॥ ५११. ११ [ १३ ] भवार्थे—ग। भावार्थे-त४.५। भावार्थे-त१.२.३.६.७.८-म-मॅ। भावर्थे (!)-मु॥

[ १०. ६६ ] ५१२. १९ [ २ ] तत्तत्कार्येषु—ग-त-म२.८-मु। नतत्कार्येषु--म१.४। तत्कार्येषु--म७-मॅ॥ ३० [ ३ ] गयं गृहं—ग-त१.२.३.४.५.७। गृहं गयं--त६.८-म-मॅ-मु॥ ५१३. २ लेटयाडागमः—ग-त१.२.३ ६.७.८-म१.२.५.७.८-मु। लेटयडागमः–त४.५-म४-मॅ॥ ५१४. ७ [७] अग्नीषोमा अग्नीषोमौ—ग-त१.२.३.४.५.७-मु। अग्नीषोमौ--त६.८-म-मॅ॥

[ १०. ६७ ] ५१७.२३ [२] प्रज्ञावत—ग१.२-त-म-मु। प्रज्ञानवतः-ग४-मॅ। प्राणवतः प्रज्ञावतो वा–उद्गीथ ॥ ५१८. २० [ ४ ] आडागमः—ग-त१.२.३.६.७-म१.२.४.५.८। अडागमः-त४.५-म७-मॅ-मु॥ २७ [ ५ ] उष:कालं ततः—§ मु। उषःकालतः (?)-मॅ॥ २८ मन्त्रं सूर्यं—§ मॅ-मु। 'मन्त्रम्' इति मास्तु अथवा 'मन्त्रं सूर्यं वा' इति भवलिति मॅक्समुल्लरमहोदयाः ॥ ५१९. ७ [६] सः पणिं—ग१.४-त-म-मु। पणिं–त२-मॅ॥ २५ [८] कप्रत्यय.–ग१.२-त१.२.७-मु। प्रत्ययः-ग४-त३.४.५.६.८-म-मॅ॥ ५२०. २१ [ ११ ] निधानाय—ग१.२। धानाय-ग४ मु। ध्यानाय-त-म-मॅ। ऋ. सं. १०.५५.१ द्रष्टव्यम् ॥ ५२१. ३ [१२]

ततः—ग४ । अतः–त-म-मॅं-मु ॥ ४ प्रत्यगमयत् अस्रावयत् वा । प्रत्यगमयत् अस्रावत् ( अस्रवयत्–ग१; अस्रावत्–ग४; अस्रवत्–भ२; अस्रावयत्–भ४ ) यद्वा–ग१.४-त-भ२.४.५.६.८; प्रत्यगमयत् यद्वा–ग२ । प्रत्यगमयत् अस्रावयत्- मु । प्रत्यगमयत्–भ७-मॅं ॥

[ १०. ६८ ] ५२१. ११ [ १ ] यथा—०मॅं । न-ग२; मु इतरेषु च 'यथा' नास्ति ॥ २३ [ २ ] संनयति—ग-त-भ-मु । नयति–मॅं ॥ २५ स्वसामर्थ्येन—ग१.२ । स्वसामर्थ्य-मॅं-मु इतरेषु च ॥ ५२२. २३ [ ५ ] समन्तात्—ग-त१.२.३.६.७.८-म । आ समंतात्–त४.५-मॅं-मु ॥ ५२३. २३ [ ८ ] निर्जभार पर्वतान्निर्जहार—ग-त१.२.३.७-मु । निर्जभार–त४.५.६. ८-भ-मॅं ॥ ५२४. ३ [ ९ ] °वलस्य पर्वणः... ..निर्जहार—०मॅं-मु । लिखितपुस्तकेष्वमुद्राः पाठाः ॥ १४ [ १० ] सूर्याचन्द्रमसौ—§-मु । सूर्यचद्रमसौ–मॅं ॥

[ १०. ६९ ] ५२६. १२ [ ४ ] त्वा त्वां—ग-त१.२.३.४.५.७-भ२-मु । त्वां–त६. ८-भ१.४.६.७.८-मॅं ॥ ५२८. ९ [ १० ] प्रत्नान्—ग-०मॅं-मु । सत्वान्–त५.६.८-भ; सवात्–त४; इतरेषु नास्ति ॥ १८ [ ११ ] °दीप्तिमन् वा—ग-त१.२.७-मु । °दीप्तिमन्–त३.४.५.६. ८-भ-मॅं । विकल्पार्थत्वात् 'वा' आवश्यकः ॥

[ १०. ७० ] ५३०. ६ [ ४ ] °शब्दस्येमनिचि—ग१.२-त२.३.६.७.८-भ२.८-०मॅं-मु । °शब्दस्यमनिचि–ग४-भ६; °शब्दस्येमनिनि–त४.५; °शब्दस्येमनिवि–भ१.४; °शब्दान्मनिनि—भ७ ॥ ७ अकारस्येकारो वर्णव्यापत्त्या—ग४-त१.२.३.६.७.८-भ१.२.४.६.७-०मॅं-मु । इकारस्य अकारो वर्णव्याप्त्या–ग१.२; अकारस्येकारो वर्णव्यापत्त्या–त४.५; आकारस्येकारो वर्णव्यापत्त्या–भ८ ॥ १७ [ ५ ] 'पृथिव्या' इति पदम् । 'पृथिव्याः' इति भाष्यकाराः । पृथिव्या वा मात्रया वा इत्थम्भूतलक्षणे तृतीयैषा पृथिव्या परिमाणभूतया–उद्गीथ ॥ ५३१. २४ [ ९ ] प्रास्तवान्तसि—§-मु-उद्गीथ । प्रास्तवान्–मॅं ॥ २५ तमप्रत्ययस्य—ग-त१.२.३.६.७.८ । तमप्रत्ययस्य–भ१.२.७.८; तुप्रत्ययस्य–भ४ । प्रत्ययस्य–त४. ५-मॅं-मु । ऋ. सं. १०.१०४.६ द्रष्टव्यम् ॥ सहायः—ग२ । सहायो–ग४-त१.२.६.७.८-भ; स्वायो–त३; स्वदायो–त४; स्वदाया–त५ । सखा–मॅं-मु ॥

[ १०. ७१ ] ५३३. १९ सुज्योतिः परमं ब्रह्म—§-मॅं । यज्ज्योतिः परमं ब्रह्म–मु । यज्ज्योतिरमृतं ब्रह्म–बृहदे ॥ ५३४. २६ [ ५ ] शुश्रुवान्—ग-त-भ४.६-मु । शुश्रुवान् श्रुतवान्–भ१.७-मॅं ॥ ५३५. ५ [ ६ ] तित्याज तत्याज—ग-त१.३.४.५.७-मु । तित्याज–त२.६.८-भ-मॅं ॥ १८ [ ७ ] तस्मादेते व्यक्ततरे इव । अस्याः श्रुतेर्मूलमन्वेषणीयम् ॥ २१ ऋच्छन्ती इव रो उदगन्ताम् । अस्या अपि मूलमन्वेषणीयम् ॥ ५३६. २६ [ १० ] सखिभूतेन—ग४ । प्रतिभूतेन–त-भ-मॅं-मु । 'प्रतिभूभूतेन' अथवा 'सखिभूतेन' इति भाष्यकारैः लिखितं स्यादिति मॅक्समुल्लरमहाशयाः । विद्वत्सखिभूतेन–उद्गीथ ॥ २१ एषां—ग-त-भ१.२.४.६.८-मु । येषां–भ७-मॅं ॥ जायते—§-मु । संजायते–मॅं ॥ ५३७. १० [ ११ ] प्रयोगं—०मॅं-मु । प्रयोगे–त१.२.३. ७.८-भ१.२.४.७.८; प्रयोगेषु–त४.५.६; प्रयोगः–भ६ ॥ १३ [ ११ ] न निपातः—ग४-त६ -०मॅं-मु । निपातः–त१.२.३.७.८-भ२.४.७; प्रतिपातः–त४.५; अनिपातः–भ८ ॥

[ १०. ७२ ] ५३८. २०. [ २ ] अधिष्ठानस°—ग-त४.५-०मॅं-मु । अभिष्ठानाः स°–त१.३.७-भ२; अधिष्ठानात्स°–त२; अष्टानाः स°–त६.८-भ८; आदितेः स्थानाः स°–भ६; अष्टानां

तत्व°-भ८ ॥ ५४०. १० [ ८ ] विवस्वानादित्यश्च । इन्द्रश्च विवस्वांश्च-तै. आ. ॥ २१ [ ९ ] मृतादुद्वृद्धाद्ण्डात्—ग२.४-त१.२.३-भ२.४.८-°मे-मु ॥

[ १०. ७३ ] ५४०. २८ महाव्रतेऽपि निष्केवल्ये—ई-मे-मु । 'महाव्रतेऽपि मरुत्वतीये' इति भाष्यम् । ऋ. सं. १.१६५;६.१७;१०.२७ प्रस्तावनासु द्रष्टव्यम् । निविद्धानम्—ई-मे-मु । मरुत्वतीयम्-ऐ. आ. ॥ ५४१. १५ तमिन्द्रं निपणोति—ग-त-भ२.८-°मे-मु । सहित च निपणोति-भ१.४; सहितमिद्र निपणोति-भ६, सहित च निपणोति-भ७ ॥ १६ [ २ ] अवर्धयन्—ग१.२-त४ । अवर्धत-ग४-त१.२.३.५.६.७.८-भ-मे-मु ॥ २३ [ ३ ] पादा पादौ—ग१.२-भ२ । पादादो-त१.३.७, पदो पदो-त४.५; पादौ दो-त२; पादो-ग४-त६.८-भ१.४.७.८-मे-मु ॥ ५४२. १५ [ ५ ] तमांसि......मे । तमांसि च ता माया व्यनाशयत्-ग१.२; इतरेषु भाष्यं इतम् । वृष्टीः प्रावपत् तमांसि च प्रावपत् व्यनाशयदित्यर्थः-मु ॥ २१ [ ६ ] अथेन्द्रस्तं—ग-°मे । अथेंद्रस्त्व-त१.२.३.४.५.७-मु; अथेंद्रः त्व-त६.८-भ८; अथेंद्र त्व-भ१.४.७; अथेंद्रः-भ६ ॥ ५४३. १ [ ७ ] किंच त्वं—ग-त३.४.५.७-भ२-मु । किंच-त६.८-भ८-मे ॥ ५ सुम्नं । सुम्न-ग१.२, सुध-ग४-त४.५.६.८; सुम्न-त१.२.७; सुम्न-त३; सुम्न-भ१.२; सुम्न-भ४; मृम्नं-भ६; शम्न-भ८ । शीघ्र-भ७-मे-मु । 'स्रुघ्न' इति ग्वालियरलिखितपुस्तके । 'स्रुघ्न' इति पाटलिपुत्रसमीपं वर्तमानस्य कस्यचन देशस्य नगरस्य च नाम । अद्यतने यमुनायास्तीरे 'सुग' इति ग्रामः वर्तते । स एवायम् ॥ काञ्ची—ग४ । काशीति-ग१.२; काती-त-भ१.२.४.८; काति-भ६ । काल्या-मे । 'काञ्चीं गतो मार्गे' इति मु-पुस्तके नास्ति ॥ १७ [ ९ ] नवममन्त्रयोर्द्वीथभाष्यम्—अस्य तवेन्द्रस्य यच्चक्रं । चक्रायुधमित्यर्थः । अप्सु लब्धव्यत्वेन निमित्तभूतासु आ निवत्तमुतो मर्यादया मेघैर्निपण्णमपि अनुप्रविष्टं चेत्यर्थः । तच्चक्रायुधमस्मै तुभ्यमिन्द्राय मधु उदकं मेघोदरगतमित् चच्छयात् । इदित्येवार्थे । चच्छत्यादिति कान्तिकर्मा । कामयत एव दातुमिति शेषः। तवायुधचेष्टित निष्फल न भवति । तदन्तर्गतमुदकमपश्यन् तुभ्य ददाति तवायुधमित्यर्थः । दत्त च सत्तदुदक त्वं पृथिव्यामदधाः दधाति पर्यायेण ओषधीषु ओषध्यादिस्थावरेषु च दधाति । यच्च अतिसित अतिशुद्धं पयः पयोरूपमुदक ऊधः प्रतीति शेषः । ऊधःप्रदेश इत्यर्थः । गोषु धारयसि त्व ॥

[ १०. ७४ ] ५४६. ५ [ ५ ] इन्द्रं देवं—ई-मु । इद्रं-मे ॥

[ १०. ७५ ] ५४७. ३ [ १ ] त्रिप्रकारं—मु । त्रिःप्रकारं-ई-मे ॥ ५४७. २० [ ३ ] व्याप्नोति—ग-त१.२.६.८-भ१.२.४.६-मु-उद्गीथ । प्राप्नोति-त३.४.५.७-भ७.८-मे ॥ ५४८. १ [ ४ ] मातरः पुत्रमिव—ग-त१.२.३-मु । पुत्रमिव-त४.५.६.७.८-भ-मे ॥ ३ तरौ—°मे । भरौ-ग-त-भ१.२.६.८-मु, भाये-भ४; भये-भ७; तदौ-ग्वालियरपुस्तके ॥ १२ [ ५ ] शृणुत च—ई-मु । शृणुत-मे ॥ १४ त७-पुस्तके पञ्चमषष्ठमन्त्रयोर्मध्ये 'सितासिते सरिते यत्र संगते' इत्यादिर्मन्त्रस्तस्य विस्तृतं भाष्य च लिखितमस्ति । खिलेष्वय मन्त्रो द्रष्टव्यः । स्पष्टार्थकत्वादस्य भाष्यस्योद्धरणमनावश्यकम् । भाष्यकारस्य नामादिसूचक वाक्यं भाष्यान्त उपलभ्यते तद्यथा—' इति श्रीमत्पदवाक्यप्रमाणमर्यादाधुरंधरचतुर्धरकुलावतंसगोविंदसूरिसूनोर्नीलकंठस्य कृतिः स्वोद्धृतमेतत्काशीखंडमंत्ररहस्यप्रकाशिका समाप्तिमगमत् ॥ ५४९. ५ [ ८ ] शोभनवसना—त१.२.३.६.७.८-भ१.२.४.६-मु । शोभनवासा-भ८ । शोभनवस्त्रोपेता-त४.५-मे ॥

[१०. ७६] ५४९. २१. [१] 'यथा' इति पदं भाष्यकारैः न व्याख्यातम् ॥ ५५०. ६. [२] घृतोऽश्व—०मॅ-मु। घृतं अश्व–ग-त१,२,३,६,७,८-म; घृताश्व-त४,५ ॥ ७. दृढं गृहीतो—ग४-त१,२,३,७-म२-मु। दृढगृहीतो–त४,५-मॅ। गृहीतो-त६,८-म ॥ वल्गति—ग४। चलति–ग१,२; बलानि–त१,२,३,७-म६; बलाति–त४,५-म२,८; ब-गति–त६,८-म१,४,७। वल्गन्- ०मॅ-मु।'वल्ग इति गत्यर्थो धातुः। वल इत्यधगतिवाचको धातुः स्यात् अतः 'बलते' इति भाष्यकारैः लिखितं स्यादिति मॅक्समुल्लरमहोदयैः स्वकीयटिप्पण्यां लिखितम् ॥ ९. 'मही' इति संहिता। 'महे' इति भाष्यकाराः ॥ ५५१. २८. [७] हृत्र्या न—त२,७-म२,४,६,८। हृत्वा न्–ग४-त१,२; हृ न–म१। हृव्या मॅ-मु ॥

[१०. ७७] ५५२. १८. [१] शोमनानां—ग-त-म२,६,८-मु। शोभमानां–म१,४; शोभमाना–म७। शोभमानाना–मॅ ॥ १९. स्तुतवानस्मि–०मॅ-मु। स्तुतोस्मि–ग-त-म ॥ ५५३. ६. [३] रिरिच्रे रिरिचिरे—ग४-त२,३,७-मु। रिरिचिरे–त१। रिरिच्रे–म-मॅ॥ १६. [४] परिष्कर्तारः—०मॅ-मु। परिवेष्टारः-ग; परिष्टारः–त१,२,३,६,७,८-म; परिष्टा–त४ ५ ॥ २४. [५] तेजस्वन्तः—त४,५-मु। तेजोवंतः–त१,२,३,६,७,८-म-मॅ। 'तसौ मत्वर्थे' इति सूत्रेण भसंज्ञा भवति, न पदसंज्ञा ॥ ५५४. ५. [६] द्वेष्टून्। कीदृशान्—ग-त-म१,२,४,६,८-मु। द्वेष्टून्–म७-मॅ ॥ १२. [७] अध्वर्युभ्य ऋत्विगादिभ्यः। अयुक्तमिदम्। 'ऋत्विग्भ्योऽध्वर्यादिभ्यः' अथवा 'अध्वर्युप्रभृतिभ्य ऋत्विभ्यः' इति भाव्यम ॥ २४. [८] यामन् यागगमने—ग-त३,६-म२,६-०मॅ। यामन् यागगमन–त१,२,३,७; यागे यागगमने-त४,५; यामन् यागमने–म१,४; यामन् यामनि गमने–म७-मु ॥

[१०. ७८.] ५५५. ६. [१] यजमाना—ग-त१,२,३,७-म६-मु। ये यजमाना–त४,५,६ ८-म८-मॅ ॥ ७. व्याप्नुता इत्यर्थः—ग-त१,२,३,४,५,७-मु। व्याप्नुता भवति–त६,८-म२,४,६,८-मॅ ॥ ५५६. १९. [५] ज्येष्ठासः ज्येष्ठाः—त१ २,३,७-मु। ज्येष्ठाः–ग-त६ ८-म-मॅ ॥ ५५७. ४. [७] दूराध्वनीना—०मॅ-मु। दूराध्वनिनो–ग त७-म१,२,७; दूराध्वानिनो–त१,२,३,६,८-म४,६ ८; अदूराध्वानिनो–त४,५ ॥

[१०. ७९.] ५५८. ३. [२] गुहा गुहायां—ग-त१,२,४,५,७-मु-उद्गीथ। गुहायां–त३,६,८-म-मॅ ॥ २६. [४] प्रभवामीत्यर्थे —ग-त१,२,३,७-०मॅ-मु। भवामीत्यर्थः–त४,५ ६,८-म ॥ ५५९. १६. [६] चकर्थ—ऽ-मॅ-मु। 'चकर्त' इति संहिता। वि चकर्त विकृतवानह--उद्गीथ ॥

[१०. ८०.] ५६१. ६. [४] विभृतानि संभृतानि—ग-त१,२,४,५,६ ७,८ म। विभृतानि–त३-मॅ-मु ॥ १६. [५] गोनां गवां—ऽ-मु-उद्गीथ। गोना–मॅ ॥

[१०. ८१.] ५६२. ७. ब्रह्म वै स्वयंभु—ग. भा। ब्रह्म वै स्वयमुः–त-मॅ-मु। ब्रह्म वै स्वयंभू–म१; ब्रह्म वै स्वयंभु–म४ ॥ ३०. [१] बहुः—०मॅ-मु। बहु–ऽ ॥ ५६३. ५. [२] अत्र तस्य—त१,२,३,६,७,८-म२,६ मु। अत्रैतस्य–त४,५; अत्रास्या–म१,४,७। तत्र तस्य–मॅ ॥ ५६४. १७. [५] मध्यमा मध्यमानि—ग४-त१,२,४,५,६,७-म२,४,६। मध्यमो मध्यमानि–त३। मध्यमानि–त८-म८-मॅ-मु ॥ शरीराणि—त१,२,३,७-म२,४,६,८। धामानि

शरीराणि–मँ-मु॥ ५६५. ११. [७] °गमनं देवं—ग-त१.२.३.४.५.६.७-म२.६-मु। °गमन–त८-म४.७.८-मँ॥

[१०. ८२.] ५६६. ४. [२] बहुविधप्रकाश°—ग-त म१.२.४.६.८ मु। बहुविध-प्रकार°–म७ मँ॥ २५. [३] तत्तत्पदेषु—ग१.२-म२.४.७.८। तत्पदेषु–ग४-त१.२.३.६.७.८-म६ मु। तत्रत्यदेवेषु–त४.५-मँ। स्वीकृतपाठो मॅक्समुल्लरमहोदयैरुपलब्धोऽपि न स्वीकृतः। मँ-पाठादयमेव साधीयान्। तत्रत्य इति पदं साकाङ्क्षम्। ५६७. २६ [६] 'अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्' इति मनुस्मृतिपाठः। वाजसनेयिसंहिता-यामपि (१७. ३०) 'तमिद्गर्भम्' इति मन्त्र आगतः। तस्य व्याख्याने 'बीजमवासृजत्' 'सूर्यकोटि°' इति स्मृतिपाठः॥ ५६८. ४ [७] सर्ववेदान्तवेद्यं—ई-मँ-मु। तै. सं. ४.६.२.२ सायणभाष्येऽप्येवमेव। वा. सं. १७.३१ महीधरभाष्ये सर्वविदान वेद्य इति पाठोऽस्ति सोऽशुद्धः। पृष्ठमात्रालेखनरीत्या 'सर्ववे' इति 'सर्वाव' इति लिख्यते॥ ६. असन्—ग१.२। असत्–ग४ त-म-मँ मु। नीहारशब्दस्य पुलिंगत्वात् स्वीकृतपाठ एव युक्तः। वा. सं. १७.३१ महीधरभाष्ये तै. सं ४.६.२.२ सायणभाष्ये च 'असत्' इत्येव पाठः॥ नाप्यत्यन्तं सत् काष्ठपाषाणादि-रूपान्तरेण संबन्द्धुमयोग्यत्वात्। काष्ठपाषाणादिर्चातिरेण संबद्धुमयोग्यत्वात्–ग; काष्ठपाषाणादि-च्चातिरेण (वंतरेण-त२; व्यतरेण–म१.४) सबुद्धमयोग्यत्वात्–त१.२.३.७-म१.२.४.६.८; काष्ठ-पाषाणादितरेण संबंधुमयोग्यत्वात्–त४.५; एतन्नास्ति म७-पुस्तके। नात्यन्त सत् काष्ठपाषाणादि-वत्सबोद्धुमयोग्यत्वात्–*मँ-मु। अस्मिन् विषये मॅक्समुल्लरमहोदयानां टिप्पणी द्रष्टव्या। अयं मन्त्रः तै. सं. ४.६.२.२; वा. सं. १७. ३१ अत्रागतः भाष्यकारैश्च व्याख्यातः। काठकमैत्रायणीसंहित-योरप्ययमागतः। तै. सं. पाठे 'बभूव' इत्यस्य स्थाने 'भवाति' इति वर्तते। तैत्तिरीयसंहितायाः सायणभाष्यस्य वाजसनेयिसंहितायां महीधरभाष्यस्य च ऋग्वेदसायणभाष्येणातीव साम्यमस्ति। उभय-भाष्यभागस्तुलनार्थमत्रोद्ध्रियते—

वा. सं. महीधरभाष्य–नीहारेण प्रावृताः नीहारसदृशेनाज्ञानेनावृतत्वान्न जानीथ यथा नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात्, नाप्यत्यन्त सत् काष्ठाश्मादिवद्रोधयितुमयोग्यत्वात् एवमज्ञानमपि नात्यन्तमसत् ईश्वरतत्त्वावरकत्वात् नापि सत् बोधमात्रनिवर्त्यत्वात् ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः। न केवल नीहारेण जल्प्या च प्रावृताः॥

तै. सं. सायणभाष्य—नीहारेण प्रावृता भवन्तो नीहारसदृशेनाज्ञानेनावृतत्वान्न जानन्ति। यथा नीहारो नात्यन्तमसत् दृष्टेरावरकत्वात्, नाप्यत्यन्त सत् काष्ठपाषाणादिरूपान्तरेण सरद्धुमयोग्य-त्वात्, एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात्, नापि सद्वाध(? द्वोध)मात्रनिवर्त्यत्वात्। ईदृशेनानिर्वचनीयेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृता। न केवल तत्त्व [न जानन्तः] किंतु जल्प्या च॥

महीधराचार्याः सायणाचार्येभ्यः पूर्वकालीना इति स्पष्टमेव। सायणाचार्यैश्च पूर्वं यजुर्वेदो व्याख्यातः अनन्तरमृग्वेदः। 'आध्वर्यवस्य यज्ञेषु प्राधान्याद्व्याकृतः पुरा। यजुर्वेदोऽथ हौत्रार्थमृग्वेदो व्याकरिष्यते॥' इति स्वय तैरेव स्वकीयऋग्वेदभाष्योपोद्घातप्रारंभे लिखितम्। अत एतन्मन्त्रस्य महीधरभाष्य दृष्ट्वा सायणाचार्यैः यजुर्वेद एतन्मन्त्रस्य व्याख्यानमारचित, यजुर्वेदमन्त्रभाष्यानुसारेण

संगयेभ्यः–मु. ' वसु ' मु–पुस्तके नास्ति। मु–पुस्तके ' क ' इत्ययं प्रैषः ' सूक्तवाक्प्रैषः ' इति संज्ञया ७ [ ३ ] अनन्तरं वर्तते।

[ ३ ] अ. = मैसं ४.१३.८, तैब्रा ३.६.१३; शांश्रौ ५.२०. १; → वासं २१.४८; २८.१२.

आ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ४९; २८. १३. मेना अर्वा रेणुककाटः प्रणग् → ऋसं ८. २८. ४ : न ता अर्वा रेणुककाटो अश्नुते. प्रणग्–मैस; पृणग्–तैब्रा–मु. °स्तरुणा; °स्तरुण–तैब्रा–मु. नवजातो, नवजातो–मु।

इ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५०; २८. १४. व्यास्मिन्–का; °यास्मिन्–मैसं–तैब्रा–मु. प्रायासिष्टां; प्रायासिष्टा–तैब्रा।

उ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; निद ९. ४२; → वासं २१. ५१; २८. १५. सूयवसा°; सुयवसा°–मु।

ए. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; निद ९. ४३; → वासं २१. ५२; २८. १६. दयमानाः–मैसं, दयमाना–तैब्रा–मु।

ऐ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५३; २८. १७. हताघशंसौ–तैब्रा–मु; हताघशंसा–मैसं।

ओ. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; → वासं २१. ५४; २८.१८.

औ. = मैसं ४. १३ ८; तैब्रा ३. ६. १६; शांश्रौ १. १३. २; → वासं २१.५५; २८. १९.

अं. = मैसं ४. १३. ८; तैब्रा ३. ६. १३; शांश्रौ ५. २०. ४; → वासं २१. ५६; २८. २०. °सुपर्णा°, °सपर्णा°–मु।

अः. = मैसं ४. १३. ८, तैब्रा ३. ६. १३, शांश्रौ ५. २०. ४; → वासं २१. ५७, २८. २१. यशस्वदेना; यशस्विदेना–मु।

क. = खिल ४. ९. ६, मैसं ४. १०. ३; तैब्रा ३. ५. ९. १; ३. ६. १३; ऋप्रा ४. ७३; आश्वश्रौ १. ८; शांश्रौ १. १३. ३–४; → वासं २१. ५८; २८. २२.

[ ४ ] अ. = आश्वश्रौ ५. ४; शांश्रौ ७. १. ३. मु–पुस्तके अस्मात्पूर्वं किंचिदधिकं विद्यते तद्यथा–' अथ सुत्याया सवनीयप्रैषाः। होता यक्षदग्निं च्छागस्य वपाया मेदसो जुषतां हविर्होतर्यज '। इन्द्रं हरिवाँ ... इन्द्रस्यापूपो = ऐब्रा २. २४ ५. प्रातःसावस्य; प्रातः प्रातःसावस्य–मु। मु–पुस्तके अ इति प्रैषानन्तर उ ए ऐ ओ औ अं इति प्रैषा मुद्रिताः शिष्टाश्च ७ [ ५ ] अन्ते निवेशिताः। ७ [ ५ ] अन्ते ' होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज ' इति प्रैषो मुद्रितः। तस्य चानन्तरं आ उ अः ख ग इति प्रैषा विनिवेशिताः तदनन्तरं कियाश्चिदधिको भागो वर्तते तस्य चानन्तरं इ क घ ङ च छ ज इति प्रैषाणां स्थानम्। मध्ये वर्तमानो मु–पुस्तकस्थोऽधिको भागोऽत्र दीयते–

होता यक्षदग्निं छागस्य हविष आदद्य मध्यतो मेद उद्भृतं पुरा द्वेषोभ्यः पुरा पौरुषेय्या गृभः॥ घसन्नूनं घासे अज्राणां यवसप्रथमानां सुमत्क्षराणां शतरुद्रियाणामग्निष्वात्तानां पीवोपवसनानां पार्श्वतः श्रोणितः शितामत उत्सादतोऽङ्गादङ्गादवत्तानां करदेवाग्निर्जुषतां हविर्होतर्यज [ → प्रैष ७ [२] ऐ ]॥ ( होता यक्षद्वनस्पतिमभि हि पिष्टतमया रभिष्टयारशनयाधित ॥ यत्राग्नेराज्यस्य हविषः प्रिया धामानि यत्र सोमस्याज्यस्य हविषः प्रिया धामानि यत्राग्नेश्छागस्य हविषः प्रिया धामानि यत्र वनस्पतेः प्रिया पाथांसि यत्र देवानामाज्यपानां प्रिया धामानि यत्राग्नेर्होतुः प्रिया धामानि तत्रैतं प्रस्तुत्येवोपस्तुत्येवोपावस्रक्षद्रभीयांसमिव कृत्वी करदेवं देवो वनस्पतिर्जुषतां हविर्होतर्यज [= प्रैष ७ [२] औ ] ॥ होता यक्षदग्निं स्विष्टकृतमयाळग्निरग्नेराज्यस्य हविषः प्रिया धामान्ययाट् सोमस्याज्यस्य हविषः प्रिया धामान्ययाळग्नेश्छागस्य हविषः प्रिया धामान्ययाट् वनस्पतेः प्रिया पाथांस्ययाट्

देवानामाज्यपानां प्रिया धामानि यक्षदग्नेर्होतुः प्रिया धामानि यक्षत्स्वं महिमानमायजतामेज्या इष कृणोतु सोऽअध्वरा जातवेदा जुषतां हविर्होतर्यज ) [ = प्रैष ७ [ २ ] अ॰ ]

उ. ≡ आश्वश्रौ ५. ४, शाश्रौ ७. १. ७

ए. ≡ आश्वश्रौ ५. ५; शाश्रौ ७. २. ३. अवसा गमत् ≡ ऋसं ५ ४६. ६.

ऐ. ≡ आश्वश्रौ ५. ५, शाश्रौ ७ २ ३. अर्हन्ता रिहाणा–का, अर्हन्ताहाणा–मु. गोअग्रयाणां वीरौ कशाश्वपुरस्तात्–का, गोअग्रा वीरोपशाश्वपुरस्या –मु आस्तिकविमोचनं–का; अस्तिवहविमोचनं–मु ।

ओ. ≡ शाश्रौ ७. २ ६, आश्वश्रौ ५. ५. नि चिम्मियन्ता चक्षसा = ऋग ८. २५. ९ : अश्णश्चिद्गातुवित्तरानुल्बणेन चक्षसा । नि चिन्मिषन्ता निचिरा नि चिक्यतुः । निचयाँसा॰–का; निचियाँमा॰–मु. चक्षसा–का, चक्षस–मु. पिबेतो–का, पिवतो–मु ।

औ. ≡ शाश्रौ ७. २. ९, आश्वश्रौ ५. ५ च वामी –का, वामा –मु ऊर्जं आवहतं–का, ऊर्जावहतं–मु. °आ नरुपो–का, °आरस्पो–मु. मधुरुश्रयेम यज्ञं युवाना मिमिक्षतां ≡ पंत्रा २१. १०. १२; काश्रौ २३. ३. १. पिबेतां–का, पिबना मु.

अं. ≡ शाश्रौ ७. ४. २, आश्वश्रौ ५. ५. श्रोरोरन्तरिक्षात् ≡ ऋसं ३. ४१. ३. स्वात्सधस्थात् ≡ ऋस ६. १७. ५

अः. ≡ शाश्रौ ७. १७. ८, आश्वश्रौ ५. ५ मन्थिन.–का, मनुश्चुत.–मु

क. ≡ शाश्रौ ८. ३. ४. प्रातस्तनागमत–का, प्रातस्तना अगमत–मु. वृषायस्वायूषा बाहुभ्यां ≡ ऋपा ९. ५२. प्रमुष्या शिप्रे ≡ ऋस ३. ३२. १. ऊर्जापिन्–का, ऋजीपि–मु. निष्पूष्य–का, निष्पृष्य–मु ।

ख. ≡ शाश्रौ ७ १९. ३.

ग. ≡ शाश्रौ ८. १. ५; आश्वश्रौ ५. १७. प्रियधाम ..पर्तानुरोः ≡ ऋपा ४. ७२. स्वादित्यमवोचत तत्–का; स्वादित्यानवोदधत्–मु. ' मन्दन्तु ' मु–मध्ये नास्ति।

घ. ≡ शाश्रौ ८. ३. ३; आश्वश्रौ ५. १८. सुसानिभमसाविपत् ≡ ऋपा ५ २७. मन्दतां–का; मदता–मु ।

ङ. ≡ शाश्रौ ५. २०. ६ ( भाष्य ) → मैस ४. १३. ९, तैब्रा ३ ६. १५, वासं २१. ५९; २८. २३; प्रैष [ २ ] क. भूज्ञ–का, भृज्न्–मु. तीव्रान्तं बहुरमध्यं ≡ ऐब्रा २. २०. १५. मदा व्यश्नोत्–का; मद्धौत्–मु. संगतेभ्य –का; संगथेभ्य –मु ।

च. ≡ शाश्रौ ८. ८. २. निरु ५. १२ ( सभाष्यं ). धानासोमानां–का–मु, धानाः सोमानां –शाश्रौ–निरु( भाष्य ). यत्वा–का–निरु; यत्वा–मु. विषं पत्नी –का–मु, वृषन् पत्नी–निरु ( भाष्य ) अराश्या॰–का–निरु; अरात्या॰–मु उदरो, उदुर–निरु( भाष्य ) ययदर्चीक॰–का, ययदर्चीक॰–मु. अर्वाकमतोत्ततथा–का, अर्वाकमना ततथा–निरु ( भाष्य ) ।

छ. ≡ शाश्रौ १०. १. ११. मु–मध्ये एतन्नास्ति. ते भ्यो–का, तेभ्यो–शाश्रौ( भाष्य ) वसुमतो...विश्वदेव्यावत॰ ≈ ऐब्रा २. २०. १४ : वसुमते रुद्रवत आदित्यवत ऋभुमत विभुमते वाजवते बृहस्पतिवते विश्वदेव्यावते. → मैस ४. ९. ८, प्रैष [ ४ ] क.

ज. ≡ आश्वश्रौ ६. ५. आ वर्तिः–का, वर्ति.–मु. यातं–का, यातं–मु अद्य–का; रद्य–मु. मानयेथां–का, मादयेथां–मु. देवा॰–का; धेनु –मु. अरुणेभि॰–का; अद्यानिः–मु. एतशेभिः–का, एतशेन–मु. सजोषसावश्विना–का; सजोषावश्विना–मु मन्देतां–का; मदेतां–मु. पिबेतां–का, पिबता–मु ।

[५] एते द्वादश ऋतुप्रैषाः ऐब्रा ५. ९; मु अत्रोपलभ्यन्ते।

अ. = शाश्रौ ७. ८. २. दिवा–का; दिव आ–मु।

आ. पिबन्तु–का; पिबतु–मु।

ए. इन्द्रं ब्रह्माणं–का; इन्द्रो ब्रह्मा–मु. ब्रह्मणा°–का; ब्राह्मणा°–मु. प्रशास्तर्यज = ऋप्रा १. १०२; माश्रौ २. ४. १. २८.

ओ. पोतर्यज = ऋप्रा १. १०१; माश्रौ २. ४. १. २८.

अः → ऋस २. ३७. ४. 'पिबतु' मु–मध्ये नास्ति।

क. पिबेतामध्वर्यू यजताम्–का; पिबतामध्वर्यू यजते–मु।

ख. त्वधाग्ने–का; त्वयाग्ने–मु. ≐ त्वयाग्नेऽयं सुन्वन्यजमानस्य–ऋप्रा २. ४२; मु.

काश्मीरपुस्तकेऽविद्यमाना अन्येऽपि केचन प्रैषाः सूत्रेषु ऋक्प्रातिशाख्ये च निर्दिष्टा वर्तन्ते तेऽप्यत्र सगृह्यन्ते—

१

होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणमिमे सोमाः सुरामाणश्छागैर्न मेषैर्ऋषभैः सुताः शष्पैर्न तोक्मभिर्लाजैर्महस्वन्तो मदा मासरेण परिष्कृताः शुक्राः पयस्वन्तोऽमृताः प्रस्थिता वो मधुश्चुतस्तानश्विना सरस्वतीन्द्रः सुत्रामा वृत्रहा जुषन्तां सोम्यं मधु पिबन्तु मदन्तु व्यन्तु होतर्यज।

= वास २१. ४२; तैब्रा २. ६. ११. १०; शाश्रौ १५. १५. ९; मैस ३. ११. ४; कास ३८. ९. शुक्राः पयस्वन्तोऽमृताः → ऋप्रा २. ४८. तानश्विना सरस्वतीन्द्रः → ऋप्रा ४. ७२. अश्विना–तैब्रा–शाश्रौ; अश्विनौ–इतरेषु. सुत्रामाणं–वास–तैब्रा–शाश्रौ; मैस–कास मध्ये एतन्नास्ति. परिष्कृताः–वास–तैब्रा; परिस्रुता–मैस. मदाः; मदा–तैब्रा. मधुश्चुतः–वास–तैब्रा; मधुश्च्युतः–मैस. सुत्रामा वृत्रहा–वास–तैब्रा; मैसमध्ये नास्ति. मदन्तु व्यन्तु–वास; मदन्तां व्यन्तु–मैस; मदन्तु पिबन्तु सोम–तैब्रा.

२

पिता मातरिश्वाच्छिद्रा पदा धा अच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानि नेषद्बृहस्पतिरुक्थामदानि शंसिषत्।

आज्यशस्त्रात्पूर्वं करणीयोऽयं जपः ऐब्रा २. ३८; आश्वश्रौ ५. ९; शाश्रौ ७. ९. १; तैसं ५. १. ८. ६. अत्रोपलभ्यते। बृहस्पतिरुक्थामदानि शंसिषत् = ऋप्रा ९. ९. धा अच्छिद्रोक्था; धादच्छिद्रोक्था–आश्वश्रौ. अच्छिद्रोक्था कवयः शंसन् सोमो विश्वविन्नीथानि; अच्छिद्रा उशिजः पदा नु तक्षुः सोमो विश्वविन्नेता–तैसं, पदोशिगसीयानुतक्षिषत्सोमो नीथविन्नीथानि–शाश्रौ.

३

दैव्याः शमितार आरभध्वमुत मनुष्या उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम्। प्रास्मा अग्निं भरत स्तृणीत बर्हिरन्वेनं माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्यः। उदीचीनामस्य पदो निधत्तात्सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं पृथिवीं शरीरम्। एकधास्य त्वचमाच्छ्यतात्पुरा नाभ्या अपिशसो वपामुत्खिदतादन्तरेवोष्माणं वारयध्वात्। श्येनमस्य वक्षः कृणुतात्प्रशसा बाहू शला दोषणी कश्यपेवांसाच्छिद्रे श्रोणी कवषोरू स्रेकपर्णाष्ठीवन्ता षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद्गात्रं गात्रमस्यानूनं कृणुतात्। ऊवध्यगोहं पार्थिवं खनतात्। अस्ना रक्षः सं सृजतात्। वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः। अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगा३उ॥

तैब्रा ३. ६. ६. १ भाष्ये अभिगुमैष इत्यस्य संज्ञा। ऐब्रा २. ६; शांब्रा १०. ४; आश्वश्रौ ३.३; शाश्रौ ५. १७. १-१०; मैस ४. १३. ४; तैब्रा ३. ६. ६. १-३; कास १६. २१, निरु ५. ११ भाष्ये एतेष्विदं दृश्यते। → शब्रा १३. ५. २.

उदीचीनाम्, उदीचीनाँ-निरुक्तभाष्ये सगर्भ्योऽनु सखा सयूथ्य:-ऋग्म्रा २. ४१. अध्रिगो शमीध्वं सुशमि शमीध्वमध्रिगो-निरु ५. ११. माता मन्यतामनु पितानु भ्राता सगर्भ्योऽनु सखा सयूथ्य:-वास ६. ९. आरभध्वमुत मनुष्या-ऐब्रा-आश्वश्रौ, उत मनुष्या आरभध्वं-इतरेषु. मेधपतिभ्यां; मेधपतये-मैस. स्तृणीत बर्हिः ≡ ऋग्म्र १. १३. ५. अन्ववसृजतादन्तरिक्षमसुं दिशः श्रोत्रं-ऐब्रा-आश्वश्रौ-शाश्रौ; अन्ववसृजतादिशः श्रोत्रमन्तरिक्षमसुं-तैब्रा, अन्ववसृजतादन्तरिक्षमसुं-मैस. वारयध्वात्-ऐब्रा-आश्वश्रौ-शाश्रौ, वारयतात्-तैब्रा-मैस. स्वच्छमितार:-ऐब्रा-आश्वश्रौ-शाश्रौ-तैब्रा, स्वदु-मैस

अन्येऽपि केचन प्रैषा आश्वश्रौ-मध्य उपलभ्यन्ते तेऽत्रोद्ध्रियन्ते-

आश्वश्रौ ३. ९, कास १७. १९; मु-

होता यक्षदश्विना सरस्वतीमिन्द्रं सुत्रामाणं सोमानां सुराम्णां जुषन्तां व्यन्तु पिबन्तु मदन्तु सोमान् सुराम्णो होतर्यज।

आश्वश्रौ ३ ५, शाश्रौ ५. १९; मैस ४. १३ ५; मु-

होता यक्षदग्निं पुरोळाशस्य जुषतां हविर्होतर्यज।

आश्वश्रौ १०. ९; शाश्रौ १६. ७. २, वास २३. ६४, मु-

होता यक्षत्प्रजापतिं महिम्नो जुषता वेतु पिबतु सोमं होतर्यज।

## कुन्तापाध्यायः ( ८–२२ )

८

इदं जना उपश्रुतं नराशंस स्तविष्यते। षष्टिं सहस्रा नवतिं च कौरम आ रुशमेषु दद्महे ॥१॥
उष्ट्रा यस्य प्रवाहिणो वधूमन्तो द्विर्दश। वर्ष्मा रथस्य नि जिहीळते दिव ईषमाणा उपस्पृशः ॥२॥
एष इषाय मामहे शतं निष्कान् दश स्रजः। त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥ ३ ॥

८-२२ एतानि कुन्तापसूक्तानि ऐतरेयब्राह्मणे ( ६ ३२-३६ ) निर्दिष्टानि। तत्र 'इदं जना' इत्याद्या ऋच. 'नाराशस्यः' उच्यन्ते। अथर्व २०. १२७. १-३, शाश्रौ १२. १४. १-३ अत्रापि ता उपलभ्यन्ते। ऋसं १. १२६. १-३ आभिः सह प्राय: तासां समानत्वम्।

१. ≡ आश्वश्रौ ८. ३. जना उपश्रुतं-का, जना उपश्रुत-इतरेषु. नराशंस-का-शाश्रौ-आश्वश्रौ-मु; नाराशंस-अथर्व. कौरम-का-शाश्रौ; कौरम-इतरेषु। २. प्रवाहिणो, प्रवाहणो-अथर्व-मु। ३. इषाय-का-अथर्व-शाश्रौ, इषाय-मु।

९

वच्यस्व रेभ वच्यस्व वृक्षे न पक्वे शकुनः। नष्टे जिह्वा चर्चरीति क्षुरो न भुरिजोरिव ॥१॥
प्र रेभासो मनीषा वृषा गाव इवेरते। अमोतपुत्रका एषामु गोदका उपासते ॥ २ ॥
प्र रेभ धियं भरस्व गोविदं वसुविदम्। देवत्रेमां वाचं श्रीणीहीषुर्नावीरास्तारम् ॥ ३ ॥

एताः 'रेभ्य' अथर्व २०. १२७. ४-६; शाश्रौ १२. १५. १, १२. १४. ४-५; मु अत्रोपलभ्यन्ते।

१. **निष्टे**-का; नष्टे-अथर्व-शाश्री-मु. **क्षुरो न क्षुरिजोरिव** = ऋस ८. ४. १६. २. **मनीषया**-का-मु; मनीषा-अथर्व-शाश्री. **एषामु मोदका उपासते**-का; एषाममोत गा इवासते -अथर्व-शाश्री; अमोतका इवासते-मु । ३. **धियं**-का; धी-अथर्व. श्रृणीहीपु:-मु-शाश्री; श्रोणीहीपु:- अथर्व. **वीरास्तारं**-का; वीरस्तारं-अथर्व-शाश्री; न वीरमस्तारं-मु ।

१०

राज्ञो विश्वजनीनस्य यो देवो मर्त्यां अति । वैश्वानरस्य सुष्टुतिमा सुनोता परिक्षितः ॥ १ ॥
परिक्षिन्नः क्षेममकरत्तम आसनमा सरम् । अराय्यं कुर्वन् कौरव्यः पतिर्वदति जायया ॥२॥
कतरत्त आ हराणि दधि मन्थां३ परिस्रुतम् । जाया पतिं वि पृच्छति राष्ट्रे राज्ञः परिक्षितः ॥३॥
अभीव स्वः प्र जिहीते यवः पक्वः पथो बिलम् । जनः स भद्रमेधते राष्ट्रे राज्ञः परिक्षितः ॥४॥

एताः ' पारिक्षित्यः ' अथर्व २०. १२७. ७-१०; शाश्री १२. १७. १. १-४; मु अत्रापि दृश्यन्ते । शाश्री १२. १६. २; आश्वश्री ८. ३; ऐब्रा ६. ३२ भाष्यमपि द्रष्टव्यम् ।

१. **सुनोता**-का-मु-अथर्व; शृणोता-शाश्री. **परिक्षितः**-का; परिक्षिति:-मु । २. **परिक्षिन्नः** -का; परिक्षितः-मु; परिच्छिन्नः-अथर्व. **क्षेममकरत्**-का-मु. क्षेममकरत्तम-शाश्री; क्षेममकरोत्- अथर्व. **तम आसनमा**-का-अथर्व; तमासुनुमा-मु. **सरम्**-का-मु, चरन्-अथर्व-शाश्री. **अराय्यं**-का; मरायं-मु; कुलायं-अथर्व-शाश्री. **कुर्वन्**-का-मु; कृण्वन्-अथर्व-शाश्री । ३. **मन्थां**-मु-शाश्री; मन्थं-अथर्व. **परिस्रुतं**-शाश्री; परि श्रुतं-अथर्व; परिस्रुतां-मु. **जाया**-का; जायाः-अथर्व । ४. **अभीव स्वः प्र जिहीते**-का; अभीवस्वः प्र जिहाते-मु. **भद्रमेधते**-का; भद्रमेधत-मु; भद्रमेधति-शाश्री ।

११

इन्द्रः कारुमबूबुधदुत्तिष्ठ वि चरा चरन् । ममेदुग्रस्य चर्कृतिः सर्व इत्ते पृणादरिः ॥ १ ॥
इह गावः प्र जायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो वीरस्त्राता नि षीदतु ॥ २ ॥
नेमा इन्द्र गावो रिषन्मो आसां गोपती रिषत् । मासाममित्रयुर्जन इन्द्र मा स्तेन ईशत ॥३॥
उप वो नर एमसि सूक्तेन वचसा वयं भद्रेण वचसा वयम् ।
वनो दधिष्व नो गिरो न रिष्येम कदा चन ॥ ४ ॥

एताः ' कारव्यः ' अथर्व २०. १२७. ११-१४; मु अत्र दृश्यन्ते । १-३ = शाश्री १२. १५. २-४. २ = ऐब्रा ८. ११; आपम १. ६. १.

१. **चरन्**-का; जरन्-शाश्री; अतं-अथर्व-मु. **चर्कृतिः**-का; चर्कृधि-अथर्व-शाश्री-मु. **सर्व इत्त पृणादरिः**-का; सर्वो इत्ते पृणादुरि:-मु । २. **वीरस्त्राता**-का-मु; ऽपि पूषा-अथर्व-शाश्री । **षीदतु**-का; षीदति-अथर्व । ३. **नेमा**-का-अथर्व-मु; मेमा-शाश्री. **गोपती रिषत्**-का-शाश्री; गोप रीरिषत्-अथर्व । ४. **वो नर एमसि**-का-मु; नो न रमसि-अथर्व. **वनो**-का, वना-अथर्व. **दधिष्व नो**-का; दधिष्व नो-मु; दधिष्वनो-अथर्व. **नो गिरो**-का; नोऽगिरो-मु ।

१२

यः सभेयो विदथ्य३ः सुत्वा यज्वा च पूरुषः । सूर्यं चामू रिशादसं तद्देवाः प्रागकल्पयन् ॥१॥
यो जाम्या३ः प्रत्यमदधः सखायं निनित्सति । ज्येष्ठो यदप्रचेतास्तदाहुरधरागिति ॥ २ ॥
यद्भद्रस्य पुरुषस्य पुत्रो भवति दाधृषिः । तद्विप्रो अब्रवीदुदगन्धर्वः काम्यं वचः ॥ ३ ॥

यश्च पणीरभुजिष्यो३ यश्च रेवाँ अदाशुरिः । धीराणां शश्वतामहं तदपागिति शुश्रव ॥ ४ ॥
ये च देवा अयजन्तायो ये च परादहुं । सूर्यो दिवमिव गत्वाय मघवानो वि रप्शते ॥ ५ ॥

'दिवा वत्सयः'–नामकमेतत्सूक्तं अथर्व २०.१२८.१-५; मु अत्र वर्तते । १ = शाङ्खा १२. २०. २. १. २ = शाङ्खा १२. २०. २. ३. ३ = शाङ्खा १२. २०. २. २. ४५ = शाङ्खा १२. २०. २. ४. ऐब्रा ६. ३२ सायणभाष्यं द्रष्टव्यम् ।

१ रिशादसं–का; रिशादस·–शाङ्खा–अथर्व. तद्देवा·–का, त देवा.–मु । २. जाम्याः प्रत्यमदस्–का, जाम्या अप्रतमदन्–मु; जाम्या अप्रयपत्तन्–शाङ्खा, जाम्या अप्रथय –अथर्व. य –का –मु; यत्–अथर्व–शाङ्खा. निनित्साति–का–मु; दुधूर्षति–अथर्व–शाङ्खा. यदग्ने°–का; यदि मघे°–मु । ३. उदगृ; उ तत्–अथर्व–शाङ्खा. काव्यं–का, कार्व–मु । ४. पणिरभुजिष्यो, पणि रभुजिष्यो–अथर्व. यहं–का–अथर्व–मु; अह–शाङ्खा. शुश्रव–का; शुश्रुम–अथर्व–शाङ्खा–मु । ५ देवा; देवाँ–अथर्व. परादहुः–का; परादिदि–अथर्व–मु. गत्वाय–का, गत्वा–मु. मघवानो–का, मघवा नो–अथर्व ।

१३

योऽनाक्ताक्ष्यो अनभ्यक्तो३ अमणिवो अहिरण्यवः । अब्रह्मा ब्रह्मण पुत्रस्तोता कल्पेषु संमिता ॥ १ ॥
य आक्ताक्षः सुभ्यक्तः सुमणि सुहिरण्यवः । सुब्रह्मा ब्रह्मण पुत्रस्तोता कल्पेषु संमिता ॥ २ ॥
अप्रपाणा च वेशन्ता रेवाँ अप्रचतिश्रय । अयभ्या कन्या कल्याणी तोता कल्पेषु संमिता ॥ ३ ॥
सुप्रपाणा च वेशन्ता रेवाँ सुप्रचतिश्रयः । सुयम्या कन्या कल्याणी त्वो तो कल्पेषु संमिता ॥ ४ ॥
परिवृक्ता च महिषी स्वस्त्या च युधिगमं । श्वाशुरश्च आयामी त्वो ता कल्पेषु संमिता ॥ ५ ॥
वावाता च महिष्मणिस्त्या च युधिगमं । अनाशुरश्च आयामी त्वो तो कल्पेषु संमिता ॥ ६ ॥

एताः जनकल्पाभिधा ऋचः अथर्व २०.१२८.६-११, शाङ्खा १२. २१.२ १-६, मु अत्रापि द्रष्टव्याः ।

१. °नाक्ताक्ष्यो–का; °नाक्ताक्षो–अथर्व–शाङ्खा–मु. मणिवो–का–मु; अमणिवो–अथर्व–शाङ्खा °ब्रह्मणः पुत्र°–का, °ब्रह्मणस्पुत्र–मु । पुत्रस्तो ता–का, पुत्रस्तोता–अथर्व. संमिता–का; संमित·–मु । २. आक्ताक्षः–का, आक्ताक्ष –इतरेषु. सुभ्यक्तः·–का, सुभ्यक्त –अथर्व. ब्रह्मणः पुत्र°–का; ब्रह्मणस्पुत्र°–मु. संमिता–का, समित –मु । ३ वेशान्ता, वेशान्ता–मु. अप्रचातिश्रय·–का; अप्रदद्दिश्च यः–शाङ्खा–मु, अप्रतिदिश्यय.–अथर्व अयभ्या; शयभ्रा–मु. त्वो ता–का; तोता–अथर्व–शाङ्खा–मु संमिता–का; समित –मु । ४. वेशान्ता, वेशान्ता–मु. सुप्रचातिश्रयः–का, सुप्रदद्दिश्च यः–शाङ्खा–मु; सुप्रतिदिश्यय –अथर्व. सुयम्या; सुयभ्रा–मु. त्वो–का; तो–अथर्व–मु–शाङ्खा. संमिता–का; समित·–मु । ५. परिवृक्ता च महिषी स्वस्त्या–का–अथर्व; परिवृक्ता च महिष्यनस्त्या–शाङ्खा; वावाता च महिष्यनस्ता–मु. च युधिगमं·–का, चायुधिगमः–शाङ्खा. श्वाशुरश्च आयामी त्वो–का; अनाशुरश्च आयामी–मु, अनाशुरश्चायामी तो–शाङ्खा; अनाशुश्चायामी–अथर्व. संमिता–का, संमितः–मु । ६. वावाता, परिवृक्ता–मु. महिष्मणिस्त्या–का; महिषी स्वस्त्या–अथर्व–शाङ्खा, महिषी विश्वस्त्या· मु. अनाशुरश्च आयामी–का; श्वाशुरश्चा· यामी–अथर्व; श्वाशुरश्च आयामी–मु; श्वाशुरश्चायामी–शाङ्खा. त्वो–का, तो–अथर्व–शाङ्खा–मु. संमिता–का; संमित·–मु ।

१४

यदिन्द्रादो दाशराज्ञेऽमानुषं विगाहथाः । विरूपः सर्वस्मा आसीत्सह यक्षाय कल्पते ॥ १ ॥
त्वं वृषाक्षुं मघवन्नम्रं मर्याकरो रविः । त्वं रौहिणं व्यास्यो वि वृत्रस्याभिनच्छिरः ॥ २ ॥

यः पर्वतान् व्यदधायो अपो व्यगाहथाः । यो वृत्रं वृत्रहन्नहन् तस्मा इन्द्र नमोऽस्तु ते ॥३॥
प्रष्टिं धावन्तं हर्योरौच्चैःश्रवसमब्रुवन् । स्वस्त्ययं जैत्रायेन्द्रमा वहतो रथम् ॥ ४ ॥
यत्वा श्वेता उच्चैःश्रवसं हर्योर्युञ्जन्ति दक्षिणम् । मूर्धानमश्वं देवानां विभ्रादिन्द्रं महीयते ॥५॥

एताः 'इन्द्रगाथाः' अथर्व २०. १२८. १२-१६; मु-पुस्तके च द्रष्टव्याः । १ = शांश्रौ १२. १५. ५. २ = शाश्रौ १२. १६. १. १. ४ = शांश्रौ १२. १६. १. २.

१. यदिन्द्रादो-अथर्व-शांश्रौ; यदिन्द्रो-मु. ऽमानुषं; मानुषं-अथर्व. विगाहथाः-अथर्व-शांश्रौ; व्यगाहथाः-मु. सदुग्रकाय वञ्चते-मु; सह यज्ञाय कल्पते-अथर्व; स ह यज्ञाय पाद्यते-शाश्रौ । २. विषासं-मु; वृषासं-अथर्व-शांश्रौ. पर्याकरोः-मु; मर्याकरोः-शाश्रौ; मर्याकरो-अथर्व. अभि-का-मु; अपि-शाश्रौ; रविः-अथर्व. व्यास्यस्त्वं-का-मु, व्यास्यो वि-अथर्व-शांश्रौ । ३. यो वृत्रं वृत्रहन्नहन् ; यो वृत्रो वृत्रहन्नहन्-मु; इन्द्रो यो वृत्रहान्महं-अथर्व. तस्मा इन्द्र-का; तस्मादिन्द्र-अथव । ४ प्राष्टं-का; पृष्टं-अथर्व. अब्रवं-का-मु; अब्रुवन्-अथर्व-शांश्रौ. वहतो रथं-का; वह सुस्रजं-अथर्व-शांश्रौ-मु । ५. यत्वा श्वेता उच्चैःश्रवसं; यत्वा श्वेतोच्चैःश्रवसं-मु; ये त्वा श्वेता अजैश्रवसो- अथर्व. हर्यो°-का-मु; हार्यो-अथर्व. मूर्धानमश्वं-का-मु; पूर्वा नमस्र-अथर्व. महीयते -का; महीयसे-मु. विभ्रदिन्द्रं-का; बिभ्रदिन्द्र-अथर्व ।

१५

एतो अश्वा आ प्लवन्ते । प्रतीपं प्रातिमन्वनम् । तासामेका हरिक्निका । हरिक्निके किमिच्छसि ॥१॥
साधुं पुत्रं हिरण्ययम् । क्वाह तं परास्यः । यत्रामूस्तिस्रः शिंशपाः । परि त्रयः पृदाकवः ॥२॥
शृङ्गं धमन्त आसते । अयं महाते अवहि । स इच्छ कं स एव कम् । स वा घ ते संघा घ ने ॥ ३ ॥
गोभी घ गोमिनीरभि । पुमा भूम्नं निनित्ससि । बल्बवयो इति । वन्दवो अयो इति ॥४॥
अजकोऽरकोऽविका । अश्वस्य वारो गोः शंफः । केशिनी श्येनी एनीव । अनामयोपजिह्विका ॥५॥
को अम्ब इडमायुनि । को अर्जुन्याः पयः । को असिक्न्याः पयः । एतं पृच्छ कुहं पृच्छ ॥६॥
कुहा कं पकके पृच्छ । यं आरन्ति स्वभिस्कुभि । अव्जन्मः कुभायवः । आमनको मनस्यकः ॥७॥
देवत्तः प्रतिजूयेः । पिनष्टि पर्णिका हविः । प्र बुद्बुदो मयायति । शुङ्ग उन्पत ॥ ८ ॥
मा त्वाति सखा नो वदत् । वशायाः पुत्रमायन् तम् । इरा वेन्द्रममन्दत । इयन्निर्यन्नेति ॥९॥
अयो इयन्नेति । अयो ज्यायस्तरो भुवत् । इयं यका शलाकका । आ मिनोति नि मज्यते ॥१०॥
तस्या अनुनिभञ्जनम् । वरुणो याति वभ्रुभिः । शतं वभ्रोरभीशुभिः । शतं कशा हिरण्ययी ॥११॥
शतं रया हिरण्ययाः । आहलकुः शवर्तक । आयवनेन तेजनी । शफेन पाव आहते ॥१२॥
वनिष्ठुनोप नृत्यति । इमं नह्यमदुरिति । ते वृक्षाः सह तिष्ठन्ति । पाकवलिः शकवलिः ॥१३॥
अश्वत्थं खदिरो धव । अरदुः परमः शये । हतं इव पापपूरुष । अदोहमिपीयूषकम् ॥१४॥
द्वौ च हास्तिनो दतौ । अध्यर्धं च परस्वतः । आदलाबुकमेककम् । अलाबुकं निखातकम् ॥ १५ ॥
कर्करिको निखातक । तद्वात उन्मथायति । कुलायं कवा इति । उग्रं वल्वदाततम् ॥१६॥
न वल्वदनाततम् । क एषा कर्करिं लिखत् । क एषां दुन्दुभिं हनत् । यदी हनत्कथं हनत् ॥१७॥
दैवी हनत्कथं हनत् । पर्याकारं पुनः पुनः ॥ १८ ॥

एतानि सप्ततिपदानि 'ऐतशप्रलापाः' इतिसंज्ञकानि अथर्व २०.१२९-१३२ मु-पुस्तके च द्रष्टव्यानि। १-३, १२, १५-१८ = शांश्रौ १२. १८. ऐब्रा ६. ३३, आश्रौ ८. ३; वैसू १२. २०, गोब्रा २. ६. १३ अपि द्रष्टव्यम्।

**१. प्रातिसत्वनं**-का-ऐब्रा-मु; प्राति सुत्वनं-अथर्व-शांश्रौ. **हरिक्रिका हरिक्रिके**-शांश्रौ-मु; हरिक्निका हरिक्निके-अथर्व। २. त-अथर्व-शांश्रौ, वं-मु। ३. वद्दाते-का, महान्ते-मु, मद्दा ते-अथर्व. **अर्वाहि**-मु, अर्वाहः-अथर्व. **स इत्थ कं स एव कं**-का-मु, स इच्छकं सघाघते-अथर्व. **सघा घ ते सघा घ मे**-का; सघा घ ते सघा ग मे-मु; सघाघते-अथर्व। ४. **गोमी घ गोमिनीरभि**-का, गोमी घ मोमिनीराभि-मु, गोमीघा गोगतीरिति-अथर्व. **पुमां भूम्ने निनित्ससि**-का, पुमां कुस्ते-निमिच्छसि-अथर्व, पुमान् भूम्ने निजित्सति-मु. **बल्बवथा इति**-का, बद्बवथो इति-मु, पल्प बद्ध वयो इति-अथर्व. **बल्बवो अथो**-का, बद्बो अथो-मु; बद्धवा अघा-अथर्व। ५. **अजकोऽरकोऽविका**-मु, अजागारकेविका-अथर्व. **वारो गो. शफ**-का; वारो गोशपद्यके-अथर्व, वाला गोशफः-मु. **केशिनी श्येनी एनीव**-का, श्येनीपती सा-अथर्व, केशिनी श्येनी एनीसा-मु। ६. **अव कुलमायुनि**-का; अव कुलिमायुनि-मु, अयं वहुल्मिा इपूनि-अथर्व. **असिक्न्याः**-का, असिद्याः-अथर्व। ७. **य आयन्ति श्वभिष्कुभिः**-का, यवानो यति स्वभिः कुभि-अथर्व **अञ्जन्त कुमायवः**-का, अकुम्यन्त. कुमायवः-मु, अकुप्यन्तः कुपायकु-अथर्व. **आमनको मनस्थकः**-का, आमणको मणस्थक-मु; आमणको मणत्सक-अथर्व। ८. **देवत्तः प्रति जूर्य**-का, देवत्त. प्रतिहूर्य.-मु, देव त्वप्रति सूर्य-अथर्व **पिनष्टि पर्तिका**-का, पिनष्टि पतिका-मु, एनश्चिपङ्क्तिका-अथर्व. **प्र दुद्ददो मघायति**-का-मु, प्र दुद्रुदो मघाप्रति-अथर्व. **शुङ्ग उत्पत**-का-मु, शृङ्ग उत्पन्न-अथर्व। ९. **त्वांति**-का; त्वामि-अथर्व, त्वावि-मु. **नो वदत्**-का, नो विदन्-अथर्व, नाविदन्-मु. **आयन् त**-का, आयान्तं-मु, आ यन्ति-अथर्व. **वेन्द्रममन्दतं**-का-मु, वेदुमर्यदत-अथर्व। १०. **इयमिति**, इयमिति-मु; इयमिति-अथर्व. **उयायस्तरो भुवत्**-का-मु, उथा अस्थिरो भवन्-अथर्व. **इयं यका**-का-मु; उयं यका शलोलका-अथर्व. **मिनोति**-का, मिणोति-मु; आमिनोनिति मद्यते-अथर्व। ११. **तस्या अनुनिभञ्जनं**-का-मु; तस्य अनु निभञ्जनं-अथर्व. बभ्रुभि-का-मु, वस्वमि-अथर्व. **शतं वभ्रोरभीशुभिः**-का; शतं वा भारती शवः-अथर्व; शत वभ्रोरभीशव.-मु. **वभ्रो**.-का-मु, **वायो**-अथर्व। **१२. रथा**-का; रथ्या-अथर्व. **आहलकुशवर्तकः**-का; आहलकु. शवर्तकु-मु, अहल कुश वर्तक-अथर्व. **तेजनी**-का; तेदनी-शांश्रौ; तीजनी-अथर्व; तेजनिः-मु **ओहते**-का; ओहति-मु. **पथि**-का, इव-अथर्व। १३. **वनिष्ठुनाप**-का-मु, वनिष्ठा नाव-अथर्व. **गृह्यासि**-का-मु; गृह्णन्ति-अथर्व. **इमं**-का-मु, इदं-अथर्व. **अदुरिति**-का-मु; मदूरिति-अथर्व. **तिष्ठन्ति**-का, तिष्ठति-अथर्व. **पाकबलिः शाकबलिः**-का-मु; पाक बलि शाक बलिः-अथर्व। १४. **शये**-का, शयो-अथर्व. **खादिरो**-का; खदुरो-मु **अरदु परम**-का-मु, अरदुपरम-अथर्व. **अदोहमित्पीयूषकं**-का-मु। अदूहमित्यां पूषक-अथर्व. **पापपूरुषः**-का-मु, व्याप पूरुषः-अथर्व. **हस्तिनो दृती**-का, हस्तिनो दती-मु, हस्तिनो दृती-अथर्व. **१५. द्वौ च**-का, दौव-अथर्व. **उन्मथायति**-का; उन्मथा इति-मु. **अध्यर्ध च**-का-मु, अध्यर्धेच-अथर्व. **१६. तद्वात**-का-मु; कद्वात-शांश्रौ. **करवॉ**-का-मु; कृणवाद्-अथर्व-शांश्रौ. **वल्पद्**-का, बलिशद्-मु, वनिषद्-अथर्व-शांश्रौ. **कर्करि**-का, कर्करी-अथर्व; कर्करो शांश्रौ। १७. **वल्पद्**-का, बलिशद्-मु; वनिपद्-अथर्व-शांश्रौ. **यदी**; यदीयं-अथर्व। १८. (रियत)-मु. **यदा हनत् कथं हनत्** = आश्रौ ८. ३. १७. **दैलीं**-का-मु; लेलि-शांश्रौ, देवी-अथर्व. **कथं** 'अन्त्या (अष्टादशी) द्विपदा' इति खिलानुक्रमणी। **पर्याकारं पुनःपुनः** = आश्रौ. ८. ३. १७. **पर्याकारं**-का-मु-आश्रौ; पर्यागारं-अथर्व-शांश्रौ।

अथर्व २०. १३२ अन्ते यदधिकं तदत्र दीयते–

ग्रीण्युष्ट्रस्य नामानि। हिरण्यं इत्येके अब्रवीत्।

द्वौ वा ये शिशवः। नीलशिखण्डवाहनः।

१६

विततौ किरणौ द्वौ तावा पिनष्टि पूरुषः। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ १ ॥
मातुष्टे किरणौ द्वौ नीवीतः पुरुषादृते। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ २ ॥
निगृह्य कर्णकौ द्वौ निरायच्छसि मध्यमम्। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ३ ॥
उत्तानायै शयानायै तिष्ठन्तेवाव गूहसि। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ४ ॥
श्लक्ष्णायां श्लक्ष्णिकायां श्लक्ष्णमेवाव गूहसि। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥५॥
अव श्लक्ष्णमवभ्रशदन्तर्लोमवति हृदे। न वै कुमारि तत्तथा यथा कुमारि मन्यसे ॥ ६ ॥

एताः 'प्रवह्लिकाः' अथर्व २०. १३३; शांश्रौ १२. २२; मु अत्राप्युपलभ्यन्ते। आश्वश्रौ ८. ३ अपि द्रष्टव्यम्।

२. **नीवीतः** ( नीवी + इतः )-मु; निवृत्तः-अथर्व-शांश्रौ. **पुरुषादृते**-मु; पुरुषादतिः-शांश्रौ; पुरुषानृते-अथर्व। ३. **मध्यमं**-का, मध्यमा-मु, मध्यमे-शांश्रौ-अथर्व. **कर्णकौ**; कर्तकौ-मु। ४. **तिष्ठन्तेवाव**-का, तिष्ठन्तीवाव-अथर्व। ५. **गूहसि**-गूहति-अथर्व। ६ **अवभ्रशद्**-का-मु; इव भ्रंशद्-अथर्व-शांश्रौ. **लोमवति**-का-शांश्रौ; लोममति-अथर्व।

१७

इहेत्था प्रागपागुदगधरागराला उदभर्त्सत ॥ १ ॥

इहेत्था प्रागपागुदगधराग्वत्साः पुरुषन्त आसते ॥ २ ॥

इहेत्था प्रागपागुदगधराक्स्थालीपाको वि लीयते ॥ ३ ॥

इहेत्था प्रागपागुदगधराक् सिलीपुच्छो वि लीयते ॥ ४ ॥

एताः 'आजिज्ञासेन्याः' अथर्व २०. १३४. १-४; शांश्रौ १२. २३. १; आश्वश्रौ ८. ३; मु अत्राप्युपलभ्यन्ते। 'सर्वास्वृक्षु 'इहेत्था' इत्यस्य स्थाने 'इहेत्थ' इति अथर्व-शांश्रौ-आश्वश्रौ-मु पुस्तकेषु।

१. **प्रागपागुदगधराक्** = वाजं ९. ३६. **अराला**-का-मु; अरालाग्-अथर्व-शांश्रौ. **उदभर्त्सत**-शांश्रौ, उदभर्त्सथ-अथर्व; उदभर्त्सतें-मु। २. **पुरुषन्त**-का; पुरुषन्त-अथर्व। ३. **स्थालीपाको वि लीयते**-का-शांश्रौ-अथर्व, सर्वापुरुसीलिलीयये-मु। ४. **सिलीपुच्छो वि लीयते**-का; स्थालीपाको वि लीयते-मु; च्छिलीपु च्छिलीयते-शांश्रौ, स वै पृथु लीयते-अथर्व।

१८

भुगित्यभिगतः। शलित्यभिष्ठितः। फलित्यपक्रान्तः ॥ १ ॥

एते त्रयः पादाः 'प्रतिराध्यः' उच्यन्ते ते च अथर्व २०. १३५. १; शांश्रौ १२. २३. २; आश्वश्रौ ८. ३; मु अत्रापि दृश्यन्ते।

**शलिति**-मु; शलिति-अथर्व-शांश्रौ. **अभिष्ठितः**-का-मु; अपक्रान्तः-अथर्व-शांश्रौ. **अपक्रान्तः**-का-मु; अभिष्ठितः-अथर्व-शांश्रौ।

१९

वीमे देवा अक्रंसताध्वर्यो. क्षिप्रं प्र चर । सुशस्तिरिद्गवामस्यसि प्रखिदसो महत् ॥ १ ॥

अयम् 'अतिवादः' अथर्व २०. १३५. ४; शाश्री १२. २३. ४; आश्वश्री ८. ३; मु अत्रापि द्रष्टव्यः।

अध्वर्योः-का; अध्वर्यो-शाश्री-अथर्व-मु. सुशस्ति-मु, सुसत्य-शाश्री-अथर्व. अस्यति प्रखिदसो महत्-का; अस्यति प्राक्खिदसो महं-मु; अस्यसि प्रखुदसि-शाश्री-अथर्व।

२०

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन् ।

तां ह जरितर्न प्रत्यायन् तामु ह जरित. प्रत्यायन् ॥ १ ॥

तां ह जरितर्न प्रत्यगृभ्णन् तामु ह जरित प्रत्यगृभ्णन् ।

अह्ना नेत सन्नविचेतनानि जज्ञा नेत सन्नपुरोगवासः ॥ २ ॥

उत श्वेत आशुपत्वा उतो पद्याभिर्जविष्ठ । उतेमाशु मानं पिपर्ति ॥ ३ ॥

आदित्या रुद्रा वसवस्त्वेळते इद राध प्रति गृभ्णीह्यङ्गिर ।

इदं राधो बृहत्पृथु देवा ददत्वा वरम् ॥ ४ ॥

तद्वो अस्तु सुचेतनं युष्मे अस्तु दिवे दिवे । प्रत्येव गृभायत ॥ ५ ॥

एता देवनीथाभिधा ऋच. अथर्व २०. १३५. ६-१०; ऐब्रा ६. ३५, शाश्री १२. १९. १-४, मु एतेषूपलभ्यन्ते। ऐब्रा-आश्वश्री (८. ३) मध्ये 'सप्तदश पदानि' इति ताभ्यां उक्ता।

१. दक्षिणां, ऽथ दक्षिणा-शाश्री. जरितर्न-का; जरिता-अथर्व। २. जरितर्न-का; जरि· तर्न·-अथर्व. जरितः-का, जरितर्नः-अथर्व. प्रत्यगृभ्णन्-का, प्रत्यगृभ्य.-अथर्व. नेत-का, देत-शाश्री. अह्ना-का; यज्ञा-शाश्री. नेत-का, देत-शाश्री अह्नानेतरस न वि चेतनानि यज्ञानेतरसं न पुरोगवामः-अथर्व। ३. जविष्ठ-का, यविष्ठः-अथर्व-शाश्री. आशुपत्वा उतो-का; आशुपत्वोतो-शाश्री. उतेमाशु-का-मु; उतो आशु-शाश्री। ४. त्वेळते-मु-ऐब्रा, त्वेनुत-अथर्व; त्वेन्द-शाश्री. इदं राधो बृहत्-मु-ऐब्रा-आश्वश्री, इदं राधो विभु प्रभु इदं राधो बृहत्-अथर्व. ददत्वा वरं-का; ददत्वासुरं-अथर्व; ददतु वद्वरं-शाश्री. युष्मे-का; युष्मा-अथर्व। ५. सुचेतनं-का, प्रचेतन-शाश्री. प्रत्येव-का; प्रतेव-शाश्री।

२१

त्वमिन्द्र शर्मरिणा हव्यं पारावतेभ्यः । विप्राय स्तुवते वसु ऋज्रुरिच्छ्रवसे वहः ॥ १ ॥

त्वमिन्द्र कपोताय च्छिन्नपक्षाय वञ्चते । श्यामाकं पक्वं पिलु च वारस्मा अकृणोर्बहु ॥ २ ॥

आरङ्गरो वावदीति त्रेधा बद्धो वरत्रया । इरामु ह प्रशंसत्यनिरामप सेधत ॥ ३ ॥

एताः 'भूतेच्छदः' अथर्व २०.१३५. ११-१३; शाश्री १२.१९.४,५,६; मु अत्राप्युपलभ्यन्ते।

१. शर्मरिणा-का; शर्मिणा-रुखेपु. पारावतेभ्यः-का, परावतेभ्य.-मु. वसु ऋज्रुरिच्छ्रवसे वहः-का; वसूनि जुरश्रवसे महे-मु; वसूनि दुरश्रवसे वह-अथर्व; वसु नि दूरश्रवसे वह-शाश्री। २. पिलु च-का, पीलु च-मु-अथर्व-शाश्री. अकृणो-अथर्व-शाश्री; अकृणोर्-का-मु। ३. आरङ्गरो-का-मु; आंगरो-रुखेपु. वरत्रया-का, वरत्रा-रुखेपु. ३ क; अह-अथर्व. शंसत्य-निरा°-का; शंसत्वनिरा°-मु. सेधत-का; सेधति-अथर्व-शाश्री; बाधता-मु।

## २२

यदस्या अंहुभेद्याः पृथु स्थूरमुपातसत् । मुष्काविदस्या एजतो गोशफे शकुलाविव ॥ १ ॥
यदा स्थूरेण पससा अणू मुष्का उपावधीत् । विष्वञ्चावस्या वर्धतः सिकतास्विव गर्दभौ ॥२॥
यदल्पिका स्वल्पिका कर्कन्धुकेव पद्यते । वासन्तिकमिव तेजनं यभ्यमाना वि नम्यते ॥३॥
यद्देवासो ललामगुं प्र विष्टीमिनमाविषुः । सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथा ॥४॥
महानग्न्युप ब्रूते ऽश्वस्यो वेशितं पसः । इदं कल्लस्य वृक्षस्य शूर्पं शूर्पं भजेमहि ॥ ५ ॥
महानग्न्यदर्श हि सोऽक्रन्ददस्तमासदत् । शक्नुकानना मुव मशकं संवमुचतन् ॥ ६ ॥
महानग्न्युलूखलमतिक्रामन्त्यब्रवीत् । यथैव ते वनस्पतेऽपि घ्नन्ति तथैव मे ॥ ७ ॥
महानग्नी कृकवाकुं शम्यया परिधावति । इदं न विद्म तेजनं शीर्ष्णो भवति धानिका ॥८॥
महानग्नी महानग्नं धावन्तमनु धावति । इमास्तदस्य गा रक्ष यभ मामद्ध्यौदनम् ॥ ९ ॥
महान् वै भद्रो बिल्वो महान् भद्र उदुम्बरः । महाँ अभिक्त बाधते महतः साधु खोदनम् ॥१०॥
कपृन्नरः कपृथमुद्दधातन चोदयत खुदत वाजसातये ।
निष्टिग्र्यः पुत्रमा च्यावयोतय इन्द्रं सबाध इह सोमपीतये ॥ ११ ॥
यद्ध प्राचीरजगन्तोरो मण्डूरधाणिकी । हता इन्द्रस्य शत्रवः सर्वे बुद्बुदयाशवः ॥ १२ ॥
दधिक्राव्णो अकारिषं जिष्णोरश्वस्य वाजिनः । सुरभि नो मुखा करत् प्र ण आयूंषि तारिषत् ॥१३॥

इत्यृग्वेदे खिले पञ्चमोऽध्यायः ॥

इति खिलानि समाप्तानि ॥

ऐब्रा ६. ३६ अनुसारेण खिलानुक्रमणीमते चेदं दशर्चं सूक्तम् । वृषाकपिसूक्त आहनस्यानन्तरं 'कपृन्नरः' 'यद्ध प्राची°' इति तृचौ 'दधिक्राव्णो' इति मन्त्रश्च पठ्यते । अतोऽत्रान्त्यास्तिस्र ऋच आहनस्याभिः सम्भाः । शांब्रा ३०. ७-८; शांश्रौ १२.२४.२; १२.२५. १, आश्वश्रौ ८.३.→'होतृप्रतिगरित्रोः सवादः' इति खिलानुक्रमणी । आद्या दशर्चः 'आहनस्याः' इतिसंज्ञकाः । ऐब्रा ६.३६. भाष्यं, शांब्रा ३०.६; गोब्रा २. ६. १५; शांश्रौ १२. २४. १; आश्वश्रौ ८.३; वैसू ३२.३१ द्रष्टव्यम् । अश्वमेधे 'यदस्या अंहुभेद्याः' इत्यनयोद्गाता परिवृक्ता महिषीमभिमेथति → शांश्रौ १६. ४. मु-पुस्तके अष्टमीं नवमीं च वर्जयित्वा शिष्टा अष्टावाहनस्याः ।

१-४ = अथर्व २०. १३६. १-४. १ = वास २३. २८; शांश्रौ १२. २४. २. २; १६. ४. ३. २ = शांश्रौ १२. २४. २. ३. ४ = वास २३. २९; शांश्रौ १२. २४. २. १; १६. ४. ६. ५ = अथर्व २०. १३६. ९; शांश्रौ १२. २४. २. ६. ६ = अथर्व २०. १३६. ५. ७. = अथर्व २०. १३६. ६; शांश्रौ १२. २४. २. ७. ८ = अथर्व २०. १३६. १०; शांश्रौ १२. २४. २. ५. ९ = अथर्व २०. १३६. ११; शांश्रौ १२. २४. २. ४. १० = अथर्व २०. १३६. १५; शांश्रौ १२. २४. २. ८. ११ = ऋसं १०. १०१. १२; अथर्व २०. १३७. २. १२ = ऋसं १०. १५५. ४; अथर्व २०. १३७. १. १३ = ऋसं ४. ३९. ६; अथर्व २०. १३७. ३.

१. पृथु-का-मु; पृथु-अथर्व-वास-शांश्रौ. स्थूरं-का-मु; स्थूलं-अथर्व-वास-शांश्रौ. मुष्का इदस्या-का; मुष्काविदस्य-इतरेषु. एजतो-का; एजते-मु. गोशफे → खिल ५. १५. ५[२]. २. स्थूरेण-का-मु; स्थूलेन-अथर्व-शांश्रौ. पससा अणू-का; पससा अनू-मु; पससाणौ-अथर्व-शांश्रौ.

यर्दतः-का; वर्धत.-अथर्व-शार्थो;, अर्दते-मु. सिकतास्विव-का, सिकतास्वेव-अथर्व. गर्दभौ-का; गर्दभः-मु। ३. फर्कन्धुकेव-मु; कर्कन्धुकेव-अथर्व. पटयते-का-मु, °पथते-अथर्व. तेजनं-का-अथर्व, तेजनो-मु. यभ्यमाना वि नभ्यते-का, यभ्यमाना वि तन्वते-मु; यन्त्य वाताय विन्यति -अथर्व। ४. ललाबुकं-का; ललामगु-अथर्व-वास-शार्थो, ललागमु-मु त्रिष्टीमिन°-वास-अथर्व-शार्थो; पिष्टीपिन°-मु. °माविपु°-का, °माषिपु°-मु. सवधना-मु-वाभ-शार्थो; सतुला-अथर्व. ले दस्यते-का; देदस्यते-मु, देदिस्यते-वास-अथर्व-शार्थो. नारी-का, नरः-मु. सत्यस्याक्षिभगो यथा-का; सवध्यः साक्षीव गो यथा-मु, सत्यस्याक्षिभुवो यथा-अथर्व-वास-शार्थो।। ५ महानग्युप-का; महाणग्न्युप-मु ऽश्वस्या-का, अश्वस्या-मु, स्वसा-अथर्व; स्वस्त्या-शार्थो. इंदक्-का-मु, इथ अथर्व-शार्थो. शूर्पशूर्प-का, शूर्पशर्प-अथर्व। ६. महान°-का-अथर्व, महाण°-मु. अदमे-का-मु; अदपद्-शार्थो। अनूमद्-अथर्व. हि सो-का-मु, वि मो-अथर्व. अस्तमामदत्-का; अस्तमागरात्-मु, अस्थानासरन्-अथर्व. शक्तु-मु, शक्ति-अथर्व कामनाभुव-का; कानना शका-मु, कानना स्तव-अथर्व. सवध्युधतं-का, सवध्युधमन्-मु, सक्तु पथम-अथर्व। ७. महान°-का-अथर्व, महाण°-मु. यथैव ते-का-मु, यथा तव-अथर्व-शार्थो ऽपि घ्नन्ति-का-मु, निरघ्नन्ति-अथर्व, निघ्नन्ति-शार्थो. तथैव मे-का-मु, तथैवति-अथर्व, तथा मम-शार्थो। ८. इदं-का, अय-अथर्व, वयं-शार्थो. तेग्ने-का; यो मृगः-अथर्व-शार्थो। भवाति धानिका-का. दरति धाणिका-अथर्व-शार्थो। ९. तदस्य-अथर्व, तु तस्य-शार्थो। १०. विल्वो-अथर्व, विल्वो-का. पक्व-का-मु, मद्र-अथर्व-शार्थो अभिन्नु-का-मु शार्थो; अभिक्त-अथर्व।

---

# संहितापदपाठशुद्धिपत्रम्

| म. | सू. | म. | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ९ | १ | २ प | र॒क्षः॑ऽहा॒ | र॒क्ष॒ऽहा |
| ,, | ११ | २ सं | दे॒वाय | दे॒वाय॑ |
| ,, | ७७ | २ सं | वेवि॑ज्ञा॒न | वेवि॑ज्ञान्॒ |
| ,, | ७९ | ४ सं | त्व॒च्य१॑प्सु | त्व॒च्य१॒॑प्सु |
| ,, | ९३ | ४ सं | °रस्म॒त्र१॑गा | °रस्म॒त्र१॒॑गा |
| ,, | ९४ | ५ सं | °म्य१॑पर्श्विं | °म्य१॒॑पर्श्विं |
| ,, | ९७ | ३९ सं | न. | न॒॑ |
| ,, | ,, | ५४ सं | स्ने॒हयु॒च्चा० | स्ने॒हयु॒च्चा० |
| ,, | ,, | ,, प | स्ने॒हय॑त् | स्ने॒हय॑त् |
| ,, | ९८ | ७ सं | इ॒त्परि | इ॒त्परि॒ |
| ,, | १०४ | ३ स | द॒क्षसा॑धन | द॒क्षसा॑धन्॒ |
| ,, | १०७ | १ सं | अ॒प्स्व१॑न्तरा | अ॒प्स्व१॒॑न्तरा |
| ,, | ,, | २ सं | सना॑दव्य | स॒ना॑दव्यः |
| ,, | १०८ | ३ सं | ह्य॒१॒द्म | ह्य॒१॑द्म |
| १० | २ | ७ सं | य | य |
| ,, | १० | ७ सं | य॒म्यं॒१॒ | य॒म्यं॒१॑ |
| ,, | ,, | १२ सं | पृ॒थ्व्यां॒ | पृथ्व्यां |
| ,, | २९ | ३ सं | अ॒म्यु१॑म्रो | अ॒म्यु१॒॑म्रो |
| ,, | ३४ | ५ प | सखिभ्यः | सखि॑ऽभ्यः |
| ,, | ३५ | ११ प | स॒र्वतातये | स॒र्व॑ऽतातये |
| ,, | ३६ | १० प | र॒यि॒मत् | र॒यि॒ऽमत् |
| ,, | ४४ | ३ प | स॒त्यऽशु॑ष्मम् | स॒त्यऽशु॑ष्मन् |
| ,, | ४५ | १० सं | सौश्र॒वसेष्वंग्न | सौश्र॒वसेष्वंग्न |
| ,, | ८५ | २६ प | त्व॒म् | त्वम् |
| ,, | ८८ | १६ प | समऽई॒ची | स॒मऽई॒॑ची |
| ,, | ९० | ९ प | छन्दांसि | छन्दांसि |
| ,, | १०२ | ७ सं | °मभ्यांना० | °मभ्यांना॒० |

सं = संहितापाठे, प = पदपाठे

| म. | सू. | म. | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १० | १०६ | ५ सं | मित्रेवं | मित्रेवं |
| ,, | ,, | ११ सं | शो | यशो |
| ,, | ,, | ,, प | ऋध्याम | ऋध्याम |
| ,, | १०९ | ४ सं | ब्राह्मणस्योपं० | ब्राह्मणस्योपं० |
| ,, | ,, | ५ सं | जुहं१ | जुहं१ |
| ,, | ११२ | ५ सं | इन्द्र | इन्द्र |
| ,, | ११३ | ८ सं | °सोमंत्रत्या | °सोमवत्या |
| ,, | ११५ | ४ प | जयसानस्यं | अयमानस्यं |
| ,, | ११६ | ७ प | पर्कः | पक्तः |
| ,, | ,, | ८ प | उत | उन |
| ,, | ,, | ,, प | पर्यस्वन्तः | अर्यस्वन्तः |
| ,, | ११७ | ९ प | समौ | समौ |
| ,, | १२१ | ४ प | आहुः | आहुः |
| ,, | १३० | १ प | इमे | इमे |
| ,, | १३८ | ४ प | अयार्यः | अयास्यः |
| ,, | १४२ | ५ सं | न्यंङ्कुत्तानामन्वेषि | न्यंङ्कुत्तानामन्वेषि |
| ,, | १४६ | १ सं | विन्दती३ | विन्दतीँ३ |
| ,, | १४९ | ३ सं | °यर्जत्र° | °यर्जत्र° |
| ,, | १५७ | ४ सं | यदांयन् | °यदायन्° |
| ,, | १७३ | ६ सं | ध्रवेर्ण | भुवेर्ण, |

---

# भाष्यशुद्धिपत्रम्

| पृष्ठे | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६३ | | म. ९. अ २. मू. ४७ ] | म. ९. अ. २. सू. ४६ ] |
| १०५ | ११ | ᵛऊर्जम् | ᵛऊर्जम् |
| १३१ | २६ | ᵛअनुष्वधं | ᵛअनुष्वधं |
| १७९ | ३ | ोमोऽष्टौ | सोमोऽष्टौ |
| १७९ | ९ | कर्माथ | कर्माथें |
| १८३ | ३ | हम्य | तुभ्यं |
| १९५ | १० | °पुत्रह | °पुत्रस्य |
| ,, | ११ | °दवोदासि° | °दैवोदासिः |
| २०७ | २१ | पवित्र | पवित्रे |
| २११ | ९ | °मक्ष° | °मक्षु° |
| २२१ | ७ | वपणनमने | वर्पणनमने |
| ३२३ | १४ | स्त्रीपुंसा° | स्त्रीपुंसा° |
| ३३६ | ३० | विराट° | विराड्° |
| ३६५ | ७ | द्रप्स | द्रप्स |
| ३७२ | १ | वा यो | वायो |
| ४३६ | ४ | द्विता° | द्विता° |
| ४३९ | ६ | °मदस्वा | °मदस्वा |
| ४६५ | १८ | सप्तचेन्द्रियाणि | सप्त चेन्द्रियाणि |
| ४६६ | १ | असुरत्वं | असुरत्व |
| ५२५ | ६ | सूक्तवाक्यश° | सूक्त वाक्यश॰ |
| ५४३ | ५ | लोकेसुम्नं | लोके सुम्नं |
| ५९० | २६ | क्षुद्रा॰ | क्षुद्रा॰ |
| ६७३ | २५ | यत | यतं |
| ,, | ,, | ह | हे |
| ७५३ | ५ | उद्गूर्णं विशेषागहनरूपं वा | उद्गूर्णविशेषागहनरूपा वा |
| ७६६ | १९ | °यंक्ताय | °युंक्ताय |
| ७६७ | ११ | श्रुप्रत्ययः | श्रुप्रत्यय° |
| ७८६ | १६ | °तु स्य | °तुस्तस्य |
| ८२७ | १२ | पष्टी | षष्ठी |
| ८२९ | १४ | ᵛस्व | ᵛस्व |